अच्युतग्रन्थमालाया अष्टमं पुष्पम्

श्रीदिवाकरविरचितः

# तिथ्यर्कः



प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः,

काशी

अच्युतग्रन्थमालाया अष्टमं पुष्पम्

श्रीदिवाकरविरचितः

# तिथ्यर्कः

काशिकश्रीजोखीराममटरूमल्लगोयनका-संस्कृतमहाविद्यालय-पुस्तका-
लयाध्यक्षेण अच्युतग्रन्थमालाध्यक्षेण च साहित्याचार्य-
श्रीकृष्णपन्तशास्त्रिणा
सम्पादितः

प्रकाशनस्थानम्—
अच्युतग्रन्थमालाकार्यालयः,
काशी

संवत् १९८९ ] [ प्रथमावृत्तिः १५००

मूल्यं सार्द्धरूप्यकम्

श्रीः

# भूमिका

दिवाकरकृदिर्धर्मशास्त्रसुधानिधिर्नाम जयति धर्म्मशास्त्रस्य किमप्य-पूर्वं ग्रन्थरत्नम् । तस्यैकभागरूपं तिथ्यर्कमिममच्युतग्रन्थमालायां संग्रथ्य सर्वसुलभतां नयन्तो वयं भृशं मोदामहे । तिथ्यर्केऽस्मिन् प्रतिपदमारभ्य पौर्णमासीपर्यन्तं सामान्येन विशेषेण च निखिलास्ति-थयो निर्णीताः । तेषु विहितं कृत्यं च संक्षेपेणोपवर्णितम् । अयमस्त्यत्र विशेषो यत्प्रतिपन्निर्णये समुपक्रान्ते चैत्रशुक्लादयश्चैत्रकृष्णान्ता अब्दभवाः सकलाः प्रतिपदो विषयान्तरव्यवधानमन्तरेण निर्णीताः । एवं सर्वा द्वितीयातृतीयाचतुर्थ्यादयश्चेति । तिथिनिर्णयान्ते इष्टि-काल-ग्रहण-पक्ष-मास-मलमास-संवत्सर-कलिवर्ज्य-वर्षवृद्धि-दर्शश्राद्धादयो भृशमपेक्षिता विषया अपि सुस्पष्टतया निर्णीताः । तिथ्यर्केति ग्रन्थस्यास्य नूनमन्वर्थं नाम । तिथीनामर्कवत्प्रकाशके केवलेऽप्यस्मिन् ग्रन्थेऽवगते तिथिविषयको लेशतोऽपि नोदेति सन्देहः ।

श्रीबालकृष्णात्मजसूनुनिर्मितां
वर्षे खवेदाश्वहिमांशुसंयुते ।
कृतिं विलोक्याऽखिलकालनिर्णयं
निःशङ्कमाशंसतु पण्डितो जनः ॥

इति वदता ग्रन्थकृतापि निरूपितो ग्रन्थस्यास्य महिमा । बहुल-मर्थमादधानः संक्षिप्तोऽप्ययं ग्रन्थः ग्रन्थकारस्य रचनाकौशलमनु-मापयति ।

ग्रन्थकृदयं कदा कं जनपदं जन्मनाऽलञ्चकारेत्यत्र विशेषान्वेषणस्य नास्ति आवश्यकता। यतो ग्रन्थकृता आत्मनो वंशो ग्रन्थनिर्माणकालश्च स्वयमुपवर्णितः।

अयं ग्रन्थकारो धर्म्मशास्त्रेऽतिप्रसिद्धस्य द्वादशमयूखानां रचयितुः श्रीनीलकण्ठभट्टपण्डितस्य दुहितरि बालादेव्यां श्रीमहादेवभट्टाज्जनिमलभत। कः खलु न जानाति नीलकण्ठपण्डितस्य पाण्डित्यं वंशपरम्पराञ्च। तद्वंश्यैर्बहुपुरुषपर्यन्तं वाराणसेयविद्वन्मूर्धन्येषु प्रथमं स्थानमासादितमासीत्। पूर्वमीमांसायां धर्मशास्त्रे कर्म्मकाण्डे च तेषामासीदखण्डोऽधिकारः। तत्पूर्वपुरुषा दाक्षिणात्ये जनपदे गोदावरीतीरे प्रतिष्ठानपुरे ( पैथनग्रामे ) निवसन्ति स्म। ततः तत्पूर्वपुरुषो रामेश्वरभट्टो ज्येष्ठसूनुना नारायणभट्टेन मध्येमार्गं समुत्पन्नेन मध्यमसुतेन श्रीधरेण च साकं काशीमाययौ। माधवनामा तस्य कनिष्ठसूनुः काश्यां जनिमलभत। रामेश्वरभट्टस्य समासन्नस्थाविरे वयसि सन्ततिरुत्पन्ना। यदा स काशीमाप तदा वृद्ध आसीत्। भारतस्य सुदूरप्रान्तेभ्योऽनेके छात्रास्ततोऽनवद्यविद्यामादातुं तत्पादमूलमागताः। तैर्दिशि दिशि तत्कीर्तिकौमुदी विस्तारिता। पण्डिताग्रणीः स पूर्णमायुरुपभुज्य अमरपुरातिथिरभूत्।

तज्ज्येष्ठतनयेन नारायणभट्टेन सर्वाणि शास्त्राणि पितुरेवाधिगतानि। तेन शास्त्रवादेऽपूर्वा कीर्त्तिरासादिता। तदानीन्तनाः सर्वे संख्यावन्तस्तं स्वनेतारमाकलयन्ति स्म। काश्यामद्यापि दाक्षिणात्यपण्डितानां दृश्यते या श्रेयसी स्थितिस्तस्याः स एवासीदचरमो हेतुः। तद्विषये एवमनुश्रूयते—कदाचिद् धर्मद्वेषिभिर्यवनैर्भगवतः श्रीविश्वेश्वरस्य मन्दिरमाक्रान्तं खण्डितञ्च। ततो जातुचित् चिरं महत्याऽनावृष्ट्या कष्टप्रायमासीत् जगत्। यवनानां स्वामिना तत्रभवानभ्यर्थितो नारायणभट्टो भगवन्तं विश्वेश्वरं प्रसादयितुम्, तेन प्रसादितो भूतभावनो दिनेनैकेन महता धारासम्पातेन लोकमासेचयामास। वृत्तायामस्यां घटनायां श्रीनारायणभट्टो यवन-

स्वामिनमभिनवं मन्दिरं निर्मापयितुमनुरुद्धवान् । अनुरुद्धो यवनपतिर्भगवतो विश्वनाथस्य मन्दिरं पुनर्निर्मापयामास । वृत्तमिदम्—'ये-नाकार्य्यविमुक्तके सुविधिना विश्वेश्वरस्थापना' इति दिवाकरभट्टस्य पद्यांशेनानुमोद्यते । सोऽसाधारिण्या धर्मनिष्ठया प्राज्ञ्येन पाण्डित्येन च जगद्गुरुरिति विरुदमुपलब्धवान् ।

श्रीनारायणभट्टवंश्यस्य श्रीकान्तानाथभट्टस्य कृतिः स्ववंश्यवर्णनात्मकं भट्टवंशवर्णनं नाम काव्यमस्माभिरुपलब्धं ततोऽपि जनश्रुतिरेषा पुष्टिमुपैति ।

पुराऽतिहिंस्रैर्यवनैरनार्यैराचारहीनैः श्रुतिबद्धवैरैः ।
श्रीविश्वनाथस्य च विश्वभूतेः प्रासादकान्तिः सहसा विदद्रे ॥
दिनेषु गच्छत्स्वथ तत्प्रकोपादवग्रहो भारतवर्षमध्ये ।
बभूव घोरो जनता विचेरुस्त्यक्त्वा स्वदेशान् विषयान्तराणि ॥
श्रेयः कथं स्यान्मम राष्ट्रमध्ये कथं नु वर्षेदिह देवराजः ।
अन्विष्यतेत्थं यवनेन सार्वभौमेन लेभे द्विजसत्तमोऽयम् ॥
अथोपविष्टं वरविष्टरे तं प्रोवाच नम्रो यवनाधिकारी ।
कृताञ्जलिः कातरशब्दगर्भां दुष्टो हि दण्डेन समेति शान्तिम् ॥
वृष्टिस्तपस्विन् जनतापहर्त्री भवेत् सुधांशोरिव रश्मिराजिः ।
भवादृशानामनुकम्पयैव लोका हि दुःखोदधिमुत्तरन्ति ॥
निशम्य तस्येति गिरं गिरीशं दध्यौ समाधिस्थित एव शान्तः ।
प्रतीतिमुत्पादयितुं सुरेषु म्लेच्छान् विनेष्यन्निदमाह धीरः ॥
अदभ्रमभ्रोत्थितमद्य तोयं सुधोपमं प्राणभृतो लभन्ताम् ।
वृष्टिस्तदासीद् गिरिशप्रभावादमोघवाचः खलु सज्जना हि ॥
ततोऽतिहृष्टाद् यवनात् समृद्धिं लेभेऽधिकां मानपुरःसरां यः ।
ततो महाराजनिदेशतोऽसौ जगद्गुरुः संप्रथितो जगत्याम् ॥
वीक्ष्यातिहृष्टं यवनं तदानीं धीरः स ऊचे वचनं महार्हम् ।
प्रासादभङ्गात् त्रिपुरान्तकस्यानावृष्टिदुःखं बुभुजे प्रजाभिः ॥

तदस्य निर्माणविधौ भवद्भिर्भूयेत सम्प्रत्यययुक्तचित्तैः ।
तदाऽनुमेने वचनं स तस्य दृष्टे कथं विप्रतिपत्तिसत्त्वम् ॥
ततोऽस्य साहाय्यमुपेत्य शम्भोः अचीकरच्छ्रेष्ठनिकेतनं सः ।
अतिष्ठपन्मूर्त्तिमुमेश्वरस्य प्रीतिप्रदामास्तिकमानवानाम् ॥

[ भट्टवंशव० का० स० ३ ]

महापण्डितस्यास्य विषये जनश्रुतिरेषापि प्रचरति, यद् दिल्लीश्वरस्यार्कवरस्य सभाया रत्नभूतेन टोडरमल्लमहाशयेन स्वपितुः श्राद्धतिथौ नानादेशेभ्योऽनेके समाहूताः पण्डितप्रवराः। तेषु गौडाः, दाक्षिणात्याः, मैथिलाः, काशीस्थाश्च निखिलवर्गीया विद्यावदातहृदया धन्याः पण्डितमूर्द्धन्या आसन्। श्राद्धदिने विनयावनतष्टोडरमल्लः सप्रश्रयं तान् पण्डितपतीनुवाच—महाभागाः, सत्सु विद्यातपोमूर्तिषु अमरगुरुकल्पेषु भगवत्सु किं नाहमस्मि एतत्प्रत्यक्षमवगन्तुं क्षमो यत् श्राद्धकर्मणानेन पितरो मे तृप्तिमुपगता इति। पृच्छामिमामाकर्ण्य मौनमुद्रामाश्रितेषु सकलेषु पण्डितेषु तत्रभवान् नारायणभट्टो वाचामविषयेण तपोबलेन विद्याबलेन च तव पितरोऽनेन श्राद्धेन तृप्ता इति तं प्रत्यक्षं दर्शितवान्। तत्र शास्त्रवादे विप्रतिपन्नान् समान् पण्डितान् विजितवांश्च। तेनाश्चर्यकारिकर्मणा भृशं तुतोष टोडरमल्लः। पृष्टवांश्च तं पण्डितप्रवरं भवतां किमभीष्टमनुष्ठीयतां मयेति। तदानीं धर्मविद्वेषिणा केनचिद् यवनेन वाराणसी भग्नविश्वेश्वरमन्दिरा अदृश्यशिवलिङ्गा च कृतासीत्। वरिवस्याव्यसनिनो विश्वेश्वरदिदृक्षाक्षुब्धाकुलांश्चाह्लादयितुमिच्छुः पण्डिताग्रणीर्नारायणभट्टः सन्तुष्टं टोडरमल्लं काश्यां विश्वेश्वरं स्थापयितुमनुरुद्धवान्। तेन सम्राडर्कवरः प्रार्थितः। तेन स्वीकृता तत्प्रार्थना। सम्राजा तेन यत् स्वीकृतिपत्रं टोडरमल्लसविधे प्रेषितं तत् स्वर्गीय म० म० श्रीहरप्रसादशास्त्रिमहोदयैरधिगतमिति श्रूयते। तैः ( Indian Antiquary for 1912 ) पत्रे नारायणभट्टस्य विषये

गवेषणापूर्णो लेख एकः प्रकाशितः, विशेषस्ततोऽवगन्तव्यः। कान्तानाथोऽपि नाश्रयत्यत्र सर्वथा मौनमुद्राम्, स आह—

दिल्लीश्वराखिलमहाकरणाधिकारि-
श्रीटोडरस्य समितौ च जिगाय सर्वान्।
विद्यानिवासमुखमैथिलगौडवर्यान्
श्राद्धे कलौ फलनिषेधविवाद एषः॥ इति।

परन्तु वृत्तान्तस्यास्योत्तरार्द्धविषये स वाचंयम एव। वृत्तयोरेनयोर्मध्ये कस्मिन् सत्यांशस्य प्राचुर्यमिति इतिहासरसिका एव विभावयन्तु।

आस्ताम् विस्तरः, प्रकृतमनुसरामः। विद्वत्कुलधौरेयस्य तस्य कुटुम्बिनस्तदानीन्तनवाराणसेयपण्डितसमाजे महतीमास्थामासादयन्। तस्य महापुरुषस्य त्रयः सूनवः समुत्पन्नाः श्रीरामकृष्णशङ्करगोविन्दभट्टाभिधाः। तेषु द्वितीयस्तनयः श्रीशङ्करभट्टो मीमांसायां परां प्रौढिमुपगत आसीत्। तेन शास्त्रदीपिकोपरि विवृत्तिरेका निर्मितेति श्रूयते। शङ्करभट्टस्य तावच्चत्वारः सूनवोऽभवन्। तेषु कनिष्ठतमो नीलकण्ठभट्टो दिवाकरभट्टस्य मातामहः प्रसिद्धमीमांसक आसीत्। तेन (१) संस्कारमयूखः, (२) आचारमयूखः, (३) समयमयूखः, (४) श्राद्धमयूखः, (५) नीतिमयूखः, (६) व्यवहारमयूखः, (७) दानमयूखः, (८) उत्सर्गमयूखः, (९) प्रतिष्ठामयूखः, (१०) प्रायश्चित्तमयूखः (११) शुद्धिमयूखः, (१२) शान्तिमयूखः, इति द्वादशमयूखा धर्मशास्त्रे विनिर्मिताः। ते च स्वाश्रयदातुर्महाराजश्रीभगवन्तदेवसेंगरस्य समज्ञां सदातनीं विधातुं तन्नाम्ना 'भगवन्तभास्कर' इति संज्ञां लम्भिताः। व्यवहारतत्त्वादयोऽन्येऽपि तन्निर्मिता ग्रन्थाः सन्तीति श्रूयते। अयं तावद् मातृवंशो ग्रन्थकारेण ग्रन्थादौ श्लोकेनैकेन निर्दिष्टः—

श्रीरामेश्वरसूरिसूनुरभवन्नारायणाख्यो महान्
येनाकार्यविमुक्तके सुविधिना विश्वेश्वरस्थापना।

2

तत्पुत्रो विबुधाधिपः क्षितितले श्रीशङ्करस्तत्सुतो
जातो भास्करपूजकः पृथुयशाः श्रीनीलकण्ठो बुधः ॥

ग्रन्थान्तरेष्वपि मातृवंशवर्णनं न विस्मृतं ग्रन्थकृता । तथाहि—
आचारार्के तावत्—

यद्वाक्याद् विधिवाक्यार्थ-(ना ?)-मपूर्वार्थाभिधातृता ।
नीलकण्ठो जयत्येष मीमांसकधुरन्धरः ॥ इति ।

दानहीरावलीप्रकाशे च—

'जीवेन्द्रारिपुरोहितामलमतिः श्रीनीलकण्ठाभिधः'

इति चतुर्थपादं परिवर्त्य तिथ्यर्कोपनिबद्ध एव श्लोकस्तेनोद्धृतः । 'तत्पुत्रीतनयो दिवाकरकृती शास्त्रेष्वधीती पितुः' इति तत्सम्बद्धं पादमेकं श्लोकान्तरेऽपि नियुक्तवान् । इति मातृवंशवर्णनसंक्षेपः ।

स्वान्ववायवर्णनेऽपि नास्ति वाचंयमो ग्रन्थकारः । तेन स्वाभिजन-दिगपि निपुणमुपदर्शितैवास्ति । यथा ज्ञायते—विमले भारद्वाजकुले श्रौतस्मार्ताखिलधर्मानुष्ठानपरिपूतस्वान्तः साहित्यामृतसौहित्यसंभृतः कवितालतालवालो भूसुराणामग्रणीर्बालकृष्णभट्टो जनिमलभत । बाल-कृष्णभट्टोऽस्माकं चरितनायकस्यासीत् पितामहः । तत्पूर्वपुरुषाणामपि नामानि अस्माभिरधिगतानि । तैः कस्मिन् विषये के के ग्रन्था आर-चिता इति ज्ञातुं प्रयतमानैरप्यस्माभिर्न पारितम् । बालकृष्णभट्टस्य वृद्धप्रपितामहो रामकृष्णभट्टनाम्ना प्रतीत आसीत्, तत्तनुजनुः—बाल-कृष्णप्रपितामहो माधवभट्टनाम्ना, तत्तनुजन्मा—बालकृष्णपितामहो नारायणभट्टनाम्ना, तदात्मजो—बालकृष्णपिता महादेव-( प्रथम)-नाम्ना चेति । बालकृष्णभट्टस्य सूनुः महादेवभट्टो ( द्वितीयः ) न्यायनये परां प्रौढिमुपगतस्तदानीन्तननैयायिकेषु प्रथमं स्थानमासादितवान् । तेन न्यायसिद्धान्तमुक्तावल्या न्यायसिद्धान्तमुक्तावलीप्रकाशाख्या टीका—या न्यायसिद्धान्तमुक्तावलीदीपिका, मुक्तावलीप्रकाशः, मुक्तावलीदीपिका, मुक्तावलीकिरणः, दिनकरीयमिति नामभिरपि व्यवह्रियते—रचयितुमा-

रब्धा, दिनकरेण तस्य कनिष्ठसूनुना समाप्तिं नीता। मुक्तावलीप्रकाशं प्रारिप्सुरयं मङ्गलमाचरन् श्लोकमिममुपनिबद्धवान्—

"लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवस्याम्बुजात्।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-
गूढार्थांस्तनुते यथामति महादेवः परेषां मुदे॥"

कियत्पर्यन्तं तेन विरचितेयं टीकेति जिज्ञासायां प्रकरणावसाने उपमानखण्डं यावत् सर्वत्र—'इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्र-बालकृष्णभट्टात्मजमहादेवभट्टविरचिते मुक्तावलीप्रकाशे उपमान-परिच्छेदाख्यः पञ्चमः परिच्छेदः' इति लिखितमस्ति, तदनन्तरं शब्दखण्डान्ते—'इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मज-महादेवभट्टारब्धे तत्पुत्रदिनकरभट्टप्रपूरिते मुक्तावलीप्रकाशे शब्द-परिच्छेदाख्यः षष्ठः परिच्छेदः' इति विन्यस्तमस्ति। गुणनिरूपणान्ते तु 'इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मजमहादेव-भट्टात्मजश्रीमद्दिनकरविरचिते न्यायसिद्धान्तमुक्तावलीप्रकाशे गुण-निरूपणम्' इति प्रतिपादितं वर्तते। तेन ज्ञायते उपमानखण्डं यावत् साकल्येन महादेवभट्टेन विरचिता, शब्दखण्डस्यापि कियानंशस्तस्या-स्तेन विरचितस्ततो मृत्याऽन्येन वा प्रत्यूहव्यूहेन विहतयत्नो न पारितवान् पूरयितुं ताम्। पितृप्रारब्धप्रबन्धस्यापूर्त्या जनताक्षति-मीक्षमाणस्तस्य कनीयान् सूनुर्दिवाकरभट्टस्यानुजो दिनकरभट्टस्तां टीकामापूरितवान्।

ग्रन्थावसाने दिनकरकृतमङ्गलश्लोकश्चेत्थमस्ति—

भानुं प्रणम्य परिभाव्य च शास्त्रसारं
मुक्तावलीकिरण एष पितृप्रदिष्टः।
सद्युक्तिभिर्दिनकरेण करेण सोऽयं
नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु॥

अनेनापि ज्ञायते पितृप्रदिष्ट एकांऽश एव दिनकरेण विरचितः, न खलु सम्पूर्णो ग्रन्थ इति। एतेन शर्मण्यदेशीयथोडरपण्डितस्य स्वीये बृहति सूचीपत्रे महादेवभट्टस्य[1] 'दिनकर' इति उपनामासीत्, तेन स्वपित्रा बालकृष्णभट्टेन[2] साकमेषा टीका निर्मिता, अत एव दिनकरीयमभिधीयते—इति व्याहृतिर्भ्रान्तिमूलैवेति निर्विवादम् ।

महादेवभट्टस्य ज्येष्ठः सूनुः धर्मशास्त्रसुधानिधे रचयिता दिवाकरभट्टनाम्ना प्रथितिमुपययौ । स एव ग्रन्थस्यास्य रचयिता । तिथ्यर्कोऽयं (यस्याऽपरं नाम तिथ्यर्कप्रकाश इति) तावदस्ति धर्मशास्त्रसुधानिधेरेको भागः । धर्मशास्त्रसुधानिधेः सन्ति सप्त भागाः—( १ ) सूर्यादिपञ्चायतनप्रतिष्ठापद्धतिः, ( २ ) तिथ्यर्कः, ( ३ ) आचारार्कः, ( ४ ) श्राद्धचन्द्रिका, ( ५ ) दानहीरावलीप्रकाशः, ( ६ ) प्रायश्चित्तमुक्तावली, (७) अन्त्येष्टिप्रकाशः, इति। लिखितं चास्ति एतत् ( Catalogue of the Sanskrit Manuscript in the Library of the India Office ) नामनि सूचीपत्रे दानहीरावलीप्रकाशस्यान्त्यांशनिर्देशान्ते—"श्रीतिथ्यर्काचारार्कौ श्राद्धप्रायश्चित्ते प्रतिष्ठा च । संस्काराशौचयुक्तो दानग्रन्थो दिवाकराज्जातः ।। इति ।

ग्रन्थकारोऽयं काशीमधिवसति स्मेत्यत्र नास्ति विवादः 'मीमांसानयकोविदः पुरभिदः चेत्राधिवासी सुधीः' इति प्रतिपादयता ग्रन्थकृता दानहीरावलीप्रकाशे स्वयमेव स्पष्टीकृतोऽयं विषयः ।

---

१—महादेवभट्टदिनकर Son of Balakrishna Bhatta, pupil of Nilakantha Bhatta, Nyaya-siddhantmuktawali-prakash or Dinakari, written jointly with his father. ( T. Aufrecht Cat. Cat. Part I, page 436 )

२—बालकृष्ण Father of Mahadeva Bhatta Dinakar, father of Divakar, father of Vaidyanath, composed together with his son Mahadeva Nyaya-siddhanta-muktavaliprakash ( page 370 )

आत्मनो मातुरभिधेयन्तु बालेति ग्रन्थकृता समाम्नातम्, 'बालां तथा मातरम्' इत्यादिना। अस्य सहधर्मिणी उपेति नाम्ना ख्याता आसीदित्यपि वृद्धेभ्योऽनुश्रूयते। एतत्सर्वं ग्रन्थकृता ग्रन्थादौ ग्रन्थान्ते च स्वयं सङ्क्षेपेणोवर्णितम्—

भारद्वाजकुलेऽमले समभवत् श्रीबालकृष्णाभिधः
साहित्यामृतवारिराशिरतुलः सर्वद्विजानां गुरुः।
तत्सूनुः प्रथमो महामणिरिव प्रख्यातकीर्तिर्गुणै-
र्जातो न्यायनये बृहस्पतिसमो नाम्ना महादेवकः॥
तत्पुत्रेण दिवाकरेण विदुषा श्रीनीलकण्ठप्रभो-
र्दौहित्रेण बुधैः सुधारससमास्वाद्यः परेषां कृते।
तिथ्यर्कः क्रियते प्रणम्य पितरं बालां तथा मातरं
श्रीकान्तं तपनं श्रियं पशुपतिं वाचं महादेवताम्॥

आचारार्के तावत्—

"महादेवतनूजन्मा भारद्वाजकुलोद्भवः।
दिवाकरो रविं नत्वा ह्याचारार्कं तनोत्यसौ॥"

दानहीरावलीप्रकाशे—

"मीमांसानयकोविदः पुरभिदः क्षेत्राधिवासी सुधीः।" इति।

दिवाकरभट्टस्य द्वौ सूनू आस्ताम्। तयोर्ज्येष्ठः श्रीरामनाम्ना[1] प्रतीत आसीत्, कनिष्ठस्तु बैजनाथ (वैद्यनाथ ?) नाम्ना। तेन तत्कृतग्रन्थेषु अनुक्रमो विरचितः। तिथ्यर्के तावदस्ति लिखितम्—

"दिवाकरतनूजेन बैजनाथेन ( वैद्यनाथेन ? ) धीमता।
खबाणसप्तभूयुक्ते १७५० वर्षे माधवसंज्ञके॥

---

१—इत्थं दिवाकरसुतेन कनीयसा श्रीरामानुजेन गुरुभक्तिपरायणेन। श्रीतातपादरचिते सुजनप्रियेऽस्मिन् ग्रन्थे क्रमो विलिखितः सवितुः प्रसादात्॥
( ति० अ० श्लो० १९२ )

मासि तातकृतग्रन्थेऽनुक्रमः संप्रदर्श्यते ।

विदुषां सुखलब्ध्यर्थमनया श्लोकमालया ॥" इति ।

केचन दानचन्द्रिकाकर्त्ताऽप्ययमेवेति प्रतिपादयन्ति । परन्तु तदज्ञानमूलमेव। यतो दानचन्द्रिकाया दानसङ्क्षेपचन्द्रिकाया वा कर्त्ता दिवाकरभट्टोऽस्ति कालोपनामकः । यद्यपि तस्य पितुरपि नाम महादेवभट्ट एवास्ति, परन्तु तस्य पितामहो रामेश्वरभट्टनामासीत् । प्रकृतग्रन्थकारस्य तु पितामहो बालकृष्णभट्ट इति प्रतिपादितपूर्वम् ।

प्रणम्य मातरं गङ्गां भैरवं वनशङ्करम् ।
महादेवाख्यपितरं श्रौतस्मार्त्तविशारदम् ॥
दिवाकरेण सुधिया सारमुद्धृत्य शास्त्रतः ।
शिष्टानां तन्यते तुष्ट्यै दानसंक्षेपचन्द्रिका ॥

इति दानसङ्क्षेपचन्द्रिकाया मङ्गलाचरणं विलोक्य तममुञ्च दिवाकरमेकं मन्यमानाः तिथ्यर्कनिर्मातुर्दिवाकरस्य मातुर्गङ्गेति नामासीदिति च प्रलपन्ति । दिवाकरभट्टस्य मातामही नीलकण्ठभट्टसहधर्मिणी गङ्गेति[1] नाम्ना प्रसिद्धा आसीत् । माता गङ्गासीदित्यत्र तु नास्माभिः प्रमाणमुपलब्धम्, परन्तु तस्या नाम बाला आसीदिति सप्रमाणं पूर्वमुपन्यस्तम् । इण्डिया[2] आफिसस्य सूचीपत्रे दानचन्द्रिकायाः परिचयदानावसरे 'दाननियमान् प्रदर्शयन् लघुग्रन्थोऽयं वाराणसेयस्य कालोपनामकदिवाकरस्य कृतिः । स खलु दिवाकरो महादेवभट्टस्य नीलकण्ठदुहितुर्गङ्गादेव्याश्च सूनुः सम्भवतो बालकृष्णभट्टस्य पौत्र आसीत्' इति

---

१—श्रीभास्करं शिवकरं शिरसा प्रणम्य श्रीनीलकण्ठपितरं जननीं च गङ्गाम् । तत्पादचिन्तनबलो बुधशङ्कराख्यः संस्कारभास्करमसुं वितनोति काश्याम् ।

२—Dana-chandrika, a manual of rules, regarding pious donations by Bhatta Dviakara, surnamed Kāle, of Benares, son of Bhatta Mahadeva (son of Balakrishna ?) and Ganga ( daughter of Bhatta Nilakantha, author of the Mayukhas.) [I. O. Cat. Part III p. 548]

प्रतिपादनं 'श्रीमत्कालोपनामकभट्टरामेश्वरात्मजभट्टमहादेवद्विजवर्य्यसूनु-दिवाकरविरचिता दानचन्द्रिका समाप्ता' इति ग्रन्थावसानादर्शनमूलकं व्यामोहविलसितमेव। तदिदमन्यद्वेदृशं सूचीपत्रं प्रमाणीकृत्य शर्मण्य-देशीयथोडरमहाशयोऽपि स्वीये बृहति सूचीपत्रे कालोपनामकदिवाक-रभट्टरचितानपि ग्रन्थान् भारद्वाजदिवाकरकृतित्वेन यदुपन्यस्तवान्, तदपि भ्रान्तिविजृम्भितमेव।

कालोपनामकदिवाकरस्य सन्ति तावदिमाः कृतयः—( १ ) दानचन्द्रिका, ( २ ) आह्निकचन्द्रिका, ( ३ ) कालनिर्णयचन्द्रिका, ( ४ ) स्मार्तप्रायश्चित्तोद्धारः ( ५ ) स्मार्तप्रायश्चित्तपद्धतिः ( ६ ) पतितत्यागविधिः ( ७ ) पुनरुपनयनप्रयोगः इति। भारद्वाजदिवाकर-कृतिसंहतिस्तु पूर्वं निरूपिता।

भारद्वाजभट्टदिवाकरमहोदयेन विरचितेषु ग्रन्थेषु मध्ये कस्यापेक्षया कस्य प्रथमं निर्मितिरभूदिति विचारे प्रस्तूयमाने यद्यपि समेषां पौर्वापर्य्यं वक्तुमतीव दुःशकं तथापि तिथ्यर्कपर्यालोचनेन यदवगम्यते तत्प्रदर्श्यते—

तिथ्यर्के १३३ तमे पृष्ठे—'प्रतिष्ठायां विशेषस्तु मत्कृतप्रतिष्ठापद्धतौ द्रष्टव्यः' 'मत्कृत' इति भूतकालनिर्देशात्—

'मलमासे श्राद्धं कार्यं न वेति विचारो विस्तरेण वक्ष्यते श्राद्ध-चन्द्रिकाप्रकाशे' ( ति० पृ० २५२ ) 'विवेचयिष्यते चैतत्स्पष्टं श्राद्ध-चन्द्रिकाप्रकाशे' ( ति० पृ० २६०) इत्यत्र 'वक्ष्यते' 'विवेचयिष्यते' इति भविष्यन्निर्देशाच्च प्रतिष्ठापद्धतिस्तावदपश्चिमा कृतिस्तिथ्यर्कापेक्षया विपश्चिदपश्चिमस्य आचारार्कश्राद्धचन्द्रिके च चरमे इति।

यद्यपि—'भोजने द्वात्रिंशद्ग्रासनियमस्तु मत्कृताचारार्के द्रष्टव्यः' ( ति० पृ० ४४ ) 'जपादिविधिस्तु मत्कृताचारार्के द्रष्टव्यः' ( ति० पृ० ६३ ) इति आचारार्कस्यापि वाक्यानि तिथ्यर्के समुद्धृतानि, 'मत्कृत' इति भूतकालनिर्देशश्च समान एव, हेतुनानेन अस्यापि प्राथम्यमनुमातुं शक्यम्, परन्तु . . . . . . .

श्रीबालकृष्णात्मजसूनुनिर्मितां
वर्षे खवेदाश्वहिमांशुसंयुते ।
कृतिं विलोक्याखिलकालनिर्णयं
निःशङ्कमाशंसतु पण्डितो जनः ॥

श्रीबालकृष्णात्मजसूनुनिर्मितं
वर्षेऽग्निवेदाश्वहिमांशुसंमुते ।
जनाः प्रकुर्युः किल धर्मकार्य-
माचारसूर्यं किल संविलोक्य ॥

इति तिथ्यर्काचारार्कयोरवसितितिथिं स्वयमुपनिबध्नता ग्रन्थकृता तिथ्यर्कस्य प्राथम्यं स्वमुखतो निवेदितम् , अतो भूतकालनिर्देशमात्रेण तस्य प्राथम्यानुमानमकिञ्चित्करम् । 'मत्कृताचारार्के द्रष्टव्यः' इति भूतकालनिर्देशसंगतये तु कियांस्तस्यांशस्तिथ्यर्कनिर्मितेः प्राङ् निर्मितः सम्पूर्तिस्तु पश्चाज्जातेत्यूहनीयम् । दानहीरावलीप्रकाशः, अन्त्येष्टि-प्रकाशः, प्रायश्चित्तमुक्तावली चैतेषां ग्रन्थानां तिथ्यर्कापेक्षया प्राथम्य-मस्ति आनन्तर्यं वा ? तेषामपि परस्परं कस्यापेक्षया कस्य प्राथम्यं कस्यानन्तर्य्यमिति निर्देष्टुं न पारितमस्माभिः । यतः तिथ्यर्के न तेभ्यो वचनानि कानिचन समुद्धृतानि, न वा ते ग्रन्थाः साकल्येन दृष्टिगोचरी-भूताः । अस्ति ग्रन्थकृतोऽस्य अन्याप्येका कृतिर्वृत्तरत्नाकरटीका—[1]वृत्तरत्नाकरादर्श इति । तस्य समाप्तौ स्वाभिजनादिकमुल्लिखता ग्रन्थ-कृता तत्समाप्तिकालोऽपि निरूपितः—

---

१—भारद्वाजकुले श्रुतिस्मृतिपटुः श्रीसूर्यभक्तस्तथा
विद्याराधनतत्परोऽपि च महादेवो भवत्तार्किकः ।
तत्पुत्रेण दिवाकरेण रचिते श्रीवृत्तरत्नाकरा-
दर्शे भट्टमतानुसारिणि परं षष्ठः समाप्तिं गतः ॥

इति श्रीभारद्वाजबालकृष्णात्मजमहादेवभट्टसूनुदिवाकरकृतो वृत्तरत्नाकरा-दर्शः सम्पूर्णतामाटीत् (I. O. Cat., Part. II, p. 304)

पूर्णाब्धिसप्तैकमिते प्रवर्षे सत्कार्तिके मासि विशुद्धपक्षे ।
तार्त्तीयपूर्णे दिवसे सुपुण्ये ह्यादर्श इत्थं घटितः समाप्तः ॥ इति ।
अनेन एकस्मिन्नेवाब्दे ( १७४० वैक्रमाब्दे ) तिथ्यर्कौ वृत्तरत्नाकरादर्शश्च कविना पूर्तिमुपनीतावित्यवगम्यते ।

तिथ्यर्कस्य निर्माणकाले ग्रन्थकृतः पञ्चाशद्वर्षासन्नमपि वयो यदि कल्प्येत, तदाऽस्य जनिर्विक्रमसप्तदशशतकस्यान्ते [ १६९० वि० ] समभूदिति आयाति। अयमेवास्य जन्मकाल इत्यभियुक्तेभ्योऽपि श्रूयते।

ग्रन्थकारोऽयं भगवतो भास्करस्यानन्यभक्त आसीदिति एतत्कृतग्रन्थोपक्रमोपसंहारश्लोकैरवगम्यते। तथाहि तिथ्यर्कोपक्रमे तावद्—

'उत्पत्त्यादि प्रकर्तारं हर्तारं तमसः परम् ।
दातारं सर्वकामानां तं भजेऽहं **विकर्त्तनम्** ॥
श्रीकान्तं **तपनं** श्रियं पशुपतिं वाचं महादेवताम् ।' इति ।

उपसंहारे तावद्—

'क्वाहं मन्दमतिः क्वायं धर्मशास्त्रसुधानिधिः ।
तस्माद्भक्तेर्विलासोऽयं **मार्तण्डाङ्घ्रिसरोजयोः** ॥'
'तेन श्री**रविमण्डलान्त**रगतो नारायणः प्रीयताम्' । इति ।

दानहीरावलीमङ्गलाचरणे—

'पद्मिनीगणविकासकारणं पाकशासनमदिशो विभूषणम् ।
यज्ञकर्मचयहेतुमन्वहं भावये **द्युमणिदेव**मन्वहम् ॥'
'देवं **चोष्णकरं** प्रणम्य तनुते श्रीदानहीरावलिम् ।' इति ।

आचारार्कोपक्रमे—

'दिवाकरो **रविं** नत्वा ह्याचारार्कं तनोत्यसौ' ॥ इति ।

वृत्तरत्नाकरादर्शोपक्रमे—

'प्रातर्भूमिरुहान् विभज्य पृथिवीं प्राप्तांस्तु पारीक्षिका
रत्नानां निचयक्रमेण परितश्चिन्वन्ति यान् सर्वदा ।

कान्तानां कुचमण्डलेषु पतिता वाह्लीकरूपं गता-
स्ताभिः पृष्ठतराश्च ते श्रमकराः सौराः कराः पान्तु माम् ॥'
इत्यादि ।

'भारद्वाजकुले श्रुतिस्मृतिपटुः श्रीसूर्यभक्तस्तथा'
'जातो भास्करपूजकः पृथुयशाः श्रीनीलकण्ठो बुधः'

इत्यादिपद्यद्वयी ग्रन्थकृत्पितरं मातामहञ्च भास्करभक्तमाम्नाति । न खलु एतौ द्वावेव किन्तु अन्येऽप्यस्य पितृपक्षीया मातृपक्षीयाश्च पूर्वजा असाधारणीं सूर्यभक्तिमावहन्ति स्मेति तत्तन्निर्मितग्रन्थकदम्ब-केभ्योऽवगम्यते ।

दिवाकरसूनुर्वैद्यनाथोऽपि स्वपूर्वजाननुजगामेति तत्कृततिथ्यर्का-नुक्रमसमाप्तिस्थात्—

'ग्रन्थे क्रमो विलिखितः सवितुः प्रसादात्' इति श्लोकांशाद् ज्ञायते ।

तिथ्यर्केऽस्मिन् प्रमाणत्वेन येषां ग्रन्थानां वचनानि समुद्धृतानि तेषामकारादिवर्णानुक्रमेणैका सूची ग्रन्थान्तेऽस्माभिः सन्निवेशिता । ततोऽतिरिक्तमपि ग्रन्थकारेण यत्र तत्र स्वमातुलमातामहमातृपितामह-मातृप्रपितामहमातृवृद्धप्रपितामहरचितग्रन्थानामपि क्वचिन्नामोल्लेखः, क्वचिद् वचनचयसंग्रहोऽनुष्ठितः । तथाहि—बोधिनीनिर्णयप्रसङ्गे—

'अन्योऽपि विस्तरोऽत्र मातुलकृतव्रतार्के द्रष्टव्यः' (ति० पृ०१५१) सावित्रीव्रतनिर्णये—'अत्र सर्वव्रतेषु कथादिकं विस्तरभिया नोक्तम्, तत् श्रीमातुलकृतव्रतार्के द्रष्टव्यम्' ( ति० पृ० २०६ ) इति मातुल-कृतग्रन्थनामनिर्देशः कृतः ।

आश्विनशुक्लनवमीपारणाविषये—'श्रीमातामहचरणास्तु विधवाया रजोदर्शने भोजननिषेधाभावात् तस्यां अपि पारणा भवत्येव । अस्तु निषेधः, स रागप्राप्तभोजननिषेधो न तु वैधः, विधिस्पृष्टे निषेधा-नवकाशात्; अन्यथा व्रतहानिः स्यात्, 'पारणान्तं व्रतं ज्ञेयम्' इत्युक्तेः' (ति० पृ० १०१) इति युक्तमुत्पश्यन्तीत्यत्रास्थाप्रदर्शनपूर्वकं वचनचयः

संगृहीतः। चैत्रशुक्लचतुर्दशीव्रतविषये—'श्रीमातामहास्तु रात्रिव्यापिनीत्येतत्पूर्वविद्धापरमित्यूचुः। तत्र स्पष्टार्थत्वात् रात्रावेव पशुपतीश्वरपूजाविधानात् च पूर्वसतमेव युक्तमाभाति' (ति० पृ० १७८) इति अत्र तन्मतानुपादेयता प्रतिपादिता। तथाहश्राद्धविनिर्णये—'माधवादयस्तु उत्तरतिथिगतावेव वृद्धिक्षयौ ग्राह्यौ, न ग्राह्यतिथिगताविल्याहुः। श्रीमातामहगुरवस्तु—परमवृद्ध्यनन्तरमाकस्मिकक्षयस्य ज्योतिःशास्त्रमर्यादया सम्भवात् पूर्वतिथ्यपेक्षया ग्राह्यतिथिगतावेव वृद्धिक्षयौ ग्राह्याविति तत्त्वमित्याहुः। (ति० पृ० २६४) अत्रार्थतो मातामहमतस्य सिद्धान्तपक्षताऽङ्गीकृता। 'अत्र शान्तिः मातामहकृतशान्तिमयूखे द्रष्टव्या'। ( ति० पृ० ११६ ) इति ग्रन्थनामोल्लिखितम्।

नृसिंहजयन्तीनिर्णये—

अत्रास्मन्मातुः पितामहचरणाः—

नृसिंहपुराणे सामान्यतः काल उत्पत्तेरुक्तः, 'विवस्वत्यस्तंगामिनीति घटिकापरिमाणानुक्तेः। तस्य स्कान्देन निर्णयः। तत्र हि प्रदोष उपात्तः। तल्लक्षणञ्च हेमाद्रावुक्तम्—

'त्रिमुहूर्त्तः प्रदोषः स्याद् भानावस्तं गते सति।' इति। तस्यापि सङ्कोचो भविष्यपुराणेन, तत्र सायङ्काल इत्युक्तेः।

'नक्षत्रदर्शनात् सन्ध्या सायं तत्परतः स्थितम्'। इति।

अत्र यद्यपि सायंशब्देन परोऽवधिर्न लभ्यते, तथापि प्रदोषशब्देन परावधिलाभात् सायंशब्देन च पूर्वावधिलाभात् त्रिघटिकात्मकसायंसन्ध्योर्ध्वघटिकात्रयं प्रदोषसायंशब्दाभ्यां परस्परं विशेषणाल्लभ्यते जन्मकालत्वेनेति तत्कालव्यापिनी नृसिंहचतुर्दश्युपोष्येति राद्धान्तमाहुः। ( ति० पृ० १८० ) इति वचनचयसंग्रहः। अत्रैव मतस्यास्य स्वाह्लादहेतुत्वं परमश्लाघ्यत्वञ्चाह ग्रन्थकारः—

अयं प्रकामं प्रियदर्शनत्वाद्

विनिर्णयो मे रुचये बभूव।

निशीथिनीनाथ इवोदितोऽसौ
प्रभाकरः पूर्णकलो नलिन्याः ॥ इति ।

प्रयागस्नानप्राशस्त्यप्रतिपादनप्रसङ्गे—अत्र विशेषस्त्वस्मन्मातृप्रपितामहभट्टश्रीनारायणपदपाथोजलिखितात् प्रयागसेतोरवगन्तव्य इति प्रचुरास्थाप्रदर्शनपूर्वकं ग्रन्थनामनिर्देशः कृतः। इति। स्वमातामहस्य भ्रातुः ( पितृव्यसूनोः ) श्रीकमलाकरभट्टस्यापि 'सिन्धुकारज्येष्ठपदेन निर्देशः कृतः। यथा रामनवमीव्रतनिर्णयप्रसङ्गे—

यत्तु सिन्धुकारज्येष्ठैर्नित्यत्वमङ्गीकृत्य 'तस्मात् सर्वात्मना सर्वैः कार्यम्' इत्युपक्रम्य अत्र केवलशैवस्य केवलकृष्णभक्तस्यापि नाधिकार इत्युक्तम्, तदुपक्रमोपसंहारविरोधात् प्रमाणाभावाच्चोपेक्ष्यम्। ( ति० पृ० १९२ )

यत्तु सिन्धुकारैर्वचनमलेखि—

"भास्करोदयमारभ्य यावत्तु दश नाडिकाः।
प्रातःकाल इति प्रोक्तः स्थापनारोपणाविधौ॥"

इति विष्णुधर्मोक्तम्, तन्महानिबन्धेष्वसत्त्वाद् भ्रान्तिमूलकमेव।
(ति० पृ० १२)

दशहराप्रसङ्गे—

यत्त्वत्र उक्तयोगेभ्यो न्यूनयोगे न स्नानमित्युक्तं सिन्धुकारज्येष्ठैस्तत्प्रमाणाभावादुपेक्ष्यम् ( ति० पृ० १०९ )। इत्यादि।

सर्वत्र खण्डनदर्शनात्खण्डनायैवोपात्तवान् तद्वाक्यानि न प्रमाणत्वेनोपन्यासायेति विज्ञायते। खण्डनमिदं विलोक्य केचनामनन्ति ग्रन्थकृतोऽस्य सिन्धुकारे नासीदास्थेति। अलमप्रस्तुतेन।

ग्रन्थान्ते स्वाहङ्कारं परिहरन्नभिहितवान् ग्रन्थकारः—

उक्तं नात्र मया स्वयं स्वरचितं यद्भट्टपादादिभिः
प्रोक्तं कालविनिर्णये तदखिलं स्पष्टं परज्ञप्तये।
सन्दिष्टं गुरुदत्तमन्त्रकृपया शार्दूलविक्रीडितं

तेन श्रीरविमण्डलान्तरगतो नारायणः प्रीयताम् ।। इति।

के सन्ति ते भट्टपादादयो याननुसृत्य कृतोऽयं ग्रन्थ इति जिज्ञासायाम्

'विभाव्य मातामहसम्प्रदायं जन्माष्टमीनिर्णयमातनोमि।'

इति जन्माष्टमीनिर्णयारम्भपद्यसंदर्शनात्, 'श्रीमातुलकृततत्त्वार्के द्रष्टव्यः' 'श्रीमातामहकृतशान्तिमयूखे द्रष्टव्यः' इत्यादिवाक्यकदम्बदर्शनात्, अन्यस्य तादृशातिप्रसिद्धस्य भट्टस्य प्रकृतग्रन्थे समुल्लेखाभावाच्च स्वमातृपक्षीयाः श्रीनीलकण्ठभट्टादय एव भट्टपादादिपदेन ग्रन्थकारेण निर्दिष्टा इति स्पष्टम् ।

ग्रन्थस्यास्य संशोधनाधारभूता एकैव मातृका। सा च सरस्वतीभवनग्रन्थागारात् श्रीकाशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाणां तत्रभवतां पण्डितप्रवरगोपीनाथकविराज एम० ए० महोदयानामनुकम्पयाऽधिगता । तैरनुकम्पयाऽनया भृशमनुगृहीताः कृतज्ञतापूर्वकं सप्रश्रयं साधुवादशतैस्तान् संयोजयामः।

मातृकायास्तस्याः क्वचित् क्वचिदस्पष्टाक्षरतया अशुद्धप्रायतया च पदे पदे लेशतः क्लेशमावहन्तो वयं निर्णयसिन्धुकालमाधवहेमाद्रिष्वपि समुद्धृतानि तान्येव वचनानि दर्शं दर्शं मूलपाठं शोधयितुं प्रायतिष्महि। क्वचित्तु मूलग्रन्थैक्येऽपि निर्णयसिन्धुसमुद्धृतवचनापेक्षया तिथ्यर्कसमुद्धृतवचनेषु वैलक्षण्यं नयनगोचरीभूतम्, परन्तु तत्र लेखकप्रमादमङ्गीकृत्य विभिन्नसकलसंस्करणसंवादी निर्णयसिन्धुपाठ एव प्रामाणिकत्वेनोररीकृतोऽस्माभिः ।

इत्थं सपरिश्रमं परिशोधितेऽप्यस्मिन् ग्रन्थे सर्वथा नास्ति स्खलितानामभावः। अतोऽभ्यर्थ्यन्ते गुणैकपक्षपातिनो मनीषिणो यदत्र मदीयदृष्टिदोषेण अायसाक्षरसंयोजकानामनवधानतया अनभिनवतया चायसाक्षराणां जातानि स्खलितानि संक्षम्य अनुगृह्णन्तु जनमिममिति शम्।

| | | |
|---|---|---|
| काशी | } | सतामाश्रवः |
| अक्षयतृतीया सं० १९८९ | } | श्रीकृष्णपन्तः |

# तिथ्यर्कविषयसूची

| विषयाः | | | पृ० पं० |
|---|---|---|---|
| वेदिकानिर्मितिः | ... | ... | १४—१० |
| कलशद्रव्यकीर्तनम् | ... | ... | १४—१२ |
| देवीप्रतिमाद्रव्यकथनम्, तदाकारनिर्णयश्च | | ... | १४—१६ |
| नवरात्रे वेदिकापरिमाणम्, पूजकनियमाश्च | | ... | १५—१ |
| देवीपूजाप्रयोगः | ... | ... | १५—४ |
| कुमारीपूजनम् | ... | ... | १७—३ |
| कुमारिकावयोनिरूपणम् | ... | ... | १७—१६ |
| पूजनानर्हकन्यकाः | ... | ... | १८—३ |
| कन्याभावे प्रतिनिधिः | ... | ... | १८—८ |
| चण्डीपाठजपविधिः | ... | ... | १८—१६ |
| सूतके देवीपूजनम् | ... | ... | १८—१९ |
| मलमासे देवीपूजननिषेधः | ... | ... | १९—११ |
| देवीपूजायां चतुर्णां वर्णानामधिकारः | | ... | २०—९ |
| नवरात्रे अश्वपूजा तद्विधानक्रमश्च | ... | ... | २०—१४ |
| नवरात्रे आयुधपूजामन्त्राः | ... | ... | २२—६ |
| कार्तिकप्रतिपन्निर्णयः | ... | ... | २७—१३ |
| कार्तिकशुक्लप्रतिपदि तैलाभ्यङ्गः | ... | ... | २७—१६ |
| कार्तिकशुक्लप्रतिपदि द्यूतक्रीडा | ... | ... | २८—२ |
| कार्तिकशुक्लप्रतिपदि गोवर्धनादिपूजनम् | | ... | २८—७ |
| चैत्रकृष्णप्रतिपत्कृत्यम् | ... | ... | २९—१ |
| विभूतिवन्दनमन्त्रः | ... | ... | २९—९ |
| चूतकुसुमप्राशनमन्त्रः | ... | ... | २९—१८ |
| द्वितीयानिर्णयः | ... | ... | ३१—७ |
| चैत्रशुक्लद्वितीयायामुमापूजाग्निपूजा च | | ... | ३१—१३ |

| विषयाः | | | पृ० पं० |
|---|---|---|---|

| विषयाः | | पृ० पं० |
|---|---|---|

विषयाः पृ० पं०

| विषयाः | | पृ० पं० |
|---|---|---|

| विषया: | | | पृ० पं० |
|---|---|---|---|

श्रीः

श्रीगणेशाय नमः ।

श्रीदिवाकररचितः

# तिथ्यर्कः

---

जानकीनयनयुग्मगोचरं मानिनां नयनयोरगोचरम् ।
नीलमेघरुचिरच्छविं सदा भावये मनसि राघवं मुदा ॥१॥

उत्पत्त्यादिप्रकर्त्तारं हर्त्तारं तमसः परम् ।
दातारं सर्वकामानां तं भजेऽहं विकर्त्तनम् ॥ २ ॥

श्रीरामेश्वरसूरिसूनुरभवन्नारायणाख्यो महान्
येनाकार्य्यविमुक्तके सुविधिना विश्वेश्वरस्थापना ।
तत्पुत्रो विबुधाधिपः क्षितितले श्रीशङ्करस्तत्सुतो
जातो भास्करपूजकः पृथुयशाः श्रीनीलकण्ठो बुधः ॥ ३ ॥

भारद्वाजकुलेऽमले समभवत् श्रीबालकृष्णाभिधः
साहित्यामृतवारिराशिरतुलः सर्वद्विजानां गुरुः ।
तत्सूनुः प्रथमो महामणिरिव प्रख्यातकीर्तिर्गुणै-
र्जातो न्यायनये बृहस्पतिसमो नाम्ना महादेवकः ॥ ४ ॥

तत्पुत्रेण दिवाकरेण विदुषा श्रीनीलकण्ठप्रभो-
दौंहित्रेण बुधैः सुधारससमास्वाद्यः परेषां कृते ।
तिथ्यर्कः क्रियते प्रणम्य पितरं बालां तथा मातरं
श्रीकान्तं तपनं श्रियं पशुपतिं वाचं महादेवताम् ॥ ५ ॥

अत्र विध्युक्तकर्मानुष्ठानफललब्ध्यर्थं तदङ्गत्वेन षोडशतिथीनां निर्णयः कृत्यञ्चोच्यते । अत्यन्ताप्राप्तप्रापणं हि विधिः । तदुक्तं वार्त्तिककारैः—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" ॥ इति ।

अस्यार्थः—यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिः । ज्योतिष्टोमस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण सिद्धं किन्त्वनेनैव विधिना, तस्मादयमपूर्वो विधिः । पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः । यथा–'व्रीहीनवहन्यादि'त्यादिः । नियमो नामाप्राप्तांशपूरणम् । अयं विधिर्नावघातस्य वैतुष्यार्थत्वबोधकः, किन्तु नियमबोधकः । वैतुष्यस्य हि नानोपायसाध्यत्वाद् यदाऽवघातं परित्यज्योपायान्तरं ग्रहीतुमारभते, तदाऽवघातस्याप्राप्तत्वेनावघातविधानात्मकमप्राप्तांशपूरणमेव करोत्ययं विधिः । पक्षेऽप्राप्तताद्दशायामवघातविधानमित्यर्थः । उभयस्या युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा—'पञ्च पञ्चनखा भक्ष्याः' इत्यादिः ।

इदं हि वचनं न भक्षणविधिपरम्, पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षप्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमित्ययं परिसंख्याविधिरित्याचार्य्यैः स्पष्टीकृतत्वात्। स च विधिराम्नायवाक्यम्। तस्य च प्रामाण्यं स्वतः सिद्धमेव। तन्मूलकत्वात् स्मृत्यादीनामपि विधित्वेन प्रामाण्यम्। स च विधिर्द्विविधः—प्रवर्त्तको निवर्त्तकश्चेति। तत्र प्रवर्त्तको यथा—

"एकादश्यामुपवसेत्पक्षयोरुभयोरपि" इति।

निवर्तको यथा—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि" इति।

एवमुभयविधविध्युक्तकर्मणामधिकरणत्वेन तिथयोऽङ्गम्। तदुक्तं निर्णयामृते—

"काले हि कर्म चोद्यते न कर्मणि कालः"। इति। अतश्च विध्यङ्गत्वेन तिथयो निर्णेतव्याः। तनोति विस्तारयति चन्द्रकलां यः कालविशेषः सा तिथिः। यथोक्तकलया तन्यत इति वा तिथिः। उक्तञ्च—

"तन्यन्ते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः" इति। सा तिथिर्द्विविधा सम्पूर्णा खण्डा च। सम्पूर्णोक्ता स्कन्दपुराणे—

"प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः"॥ इति।

हरिवासर एकादशी। तत्र सम्पूर्णत्वमग्रे वक्ष्यामः। तदन्या खण्डा। तत्र सन्दिग्धत्वात्खण्डैव निर्णेतव्या, न तु सम्पूर्णापि; प्रयोजनाभावात्। निर्णयलक्षणमुक्तं निर्णयामृते—

"तत्त्वे विप्रतिपन्नानां वाक्यानामितरेतरम्।
विरोधपरिहारोऽत्र निर्णयस्तत्त्वदर्शनम्॥" इति।

सर्वतिथिषु स्मृत्याद्युक्तमनुष्ठानं कृत्यम्। अथ तिथिनिर्णयः। तत्रादौ संवत्सरारम्भे प्रथमोपस्थितत्वात् प्रतिपन्निर्णीयते। अस्याश्च नामनिरुक्तिरुक्ता भविष्ये—

"तिथीनां प्रवरा यस्माद् ब्रह्मणा समुदाहृता।
प्रतिपाद्या पदे पूर्वे प्रतिपत्तेन सोच्यते"॥ इति।

यद्वा, प्रतिपद्यते—उपक्रम्यते मासादिरनयेति प्रतिपत्। सा शुक्लपक्षे प्रतिपत् पूर्वविद्धा ग्राह्या, प्रतिपदप्यमावास्येति युग्मवाक्यात्। सापि यदा पञ्चधा विभक्तस्याह्नश्चतुर्थभागव्यापिनी तदैव पूर्वविद्धा ग्राह्या। अपराह्णोत्तरकाले तु प्रवृत्ता उत्तरविद्धैव ग्राह्या, "प्रतिपत्संमुखी कार्या या भवेदपराह्णिकी" इति मदनरत्ने स्कान्दात्।

संमुखी पूर्वविद्धा कृष्णपक्षे परा, 'प्रतिपत् सद्वितीया स्यादि'त्यापस्तम्बीययुग्मवाक्यात्। उपवासे तु शुक्ला कृष्णापि प्रतिपत्पूर्वैव ग्राह्या,

"प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता"

इति जाबालिवचनात्। अयं सामान्यतो निर्णयः, विशेषत-

स्तत्र तत्र वक्ष्यते। ननु पूर्वविद्धायां प्रतिपदि विहितो यः पापक्षयार्थमुपवासस्तस्य सङ्कल्पः किं प्रातः कार्यः? उत प्रतिपत्प्रवेशे? इति। नाद्यः,

"यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु॥"

इति स्कान्दाद् अमावास्याकाले प्रतिपदुपवाससङ्कल्पायोगात्। न द्वितीयः पक्षः,—'प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्' इति वचनात्प्रातःकालस्यैव सङ्कल्पाङ्गत्वयोगात्। सिद्धान्तस्तु—

"प्रातरारभ्य मतिमान् कुर्यान्नक्तव्रतादिकम्।
नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ॥"

इत्यादिवाक्यैः प्रातरेव सङ्कल्पः कार्यः, यद्यपि तदानीं ज्योतिःशास्त्रसिद्धप्रतिपदभावोऽस्ति तथापि स्मृतिभिरापादितप्रतिपत्साकल्यसद्भावात्।

"यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः।
तिथिः सा सकला ज्ञेया दानाध्ययनकर्मसु॥"

कर्मसु—उपवासनक्तादिषु।

अत्रास्तमयात्पूर्वं त्रिमुहूर्त्ता तिथिर्विज्ञेया न न्यूना।

"यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तिका।
धर्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः॥"

इति सौरपुराणात्।

तदेवं प्रतिपदुपवासोत्तरं परेद्युः पारणं प्रातर्विधेयम्, उत

तिथ्यन्ते—इति सन्देहे तिथ्यन्त एवेति ब्रूमः,

"तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।
अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयात् ॥"

इति सुमन्तुवचनात् ।

अस्य चापवादो माधवीये—

"तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते ।
यामत्रयोर्द्ध्ववर्तिन्यां प्रातरेव हि पारणम् ॥" इति ।

यत्तु देवलवचनम्—

"उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत् ।
अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति ॥" इति, तत्-

परविद्धोपवासविषयम्;

"पूर्वविद्धासु तिथिषु भेषु च श्रवणं विना ।
उपोष्य विधिवत् कुर्यात्तत्तदन्ते च पारणम् ॥"

इति नैगमात् । धर्मं यमम् ।

अत्र माधवस्तु—

"तिथीनामेव सर्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ॥"

इति स्कन्दपुराणवचनगतादिशब्दगृहीतान्येकभक्तनक्तायाचितान्यपि यां तिथिमुद्दिश्यैतानि पूर्वेद्युर्विहितानि परेद्युस्तत्तिथिभागेऽतीते पश्चाद्भोजनं कार्यम्, अन्यथा पूर्वदिनानुष्ठितैकभक्तादि व्रतानां वैकल्यं स्यादित्यभिप्रायः—इत्याह । ननु योऽयमुपवासः

पूर्वविद्धप्रतिपदि विहितः स केनापि निमित्तेन तत्र कर्तुं न शक्यते चेत्, तदोत्तरविद्धा गौणकालत्वेन ग्राह्या, किंवा मुख्यकालातिक्रमाद् व्रतत्याग एव, काले हि कर्म चोद्यत इत्युक्तत्वात्।

तत्र केचित् परित्यागमेवाङ्गीचक्रुः, मुख्यकालातिक्रमेणाप्यनुष्ठाने यदा कदाप्यनुष्ठानप्रसङ्गात्, नायं दोषः, प्रतिपद्दर्शनाभावेन यदा कदाचिदनुष्ठानप्रसङ्गप्रसक्त्यभावात्, विशेष्यान्वितस्यैव विशेषणस्याभ्यर्हितत्वात्।

अतएव माधवः—

कदाचित्तदसम्भवे मानान्तरेणाप्यनुष्ठानमेव श्रेयो न तु तल्लोपो युक्त इत्याह।

तत्र सामान्यतः सर्वतिथिषु तिथिपतित्वेनाग्न्यादिपूजनं कार्यमित्युक्तं निर्णयामृते वह्निपुराणे—

"प्रतिपद्यग्निपूजा स्याद् द्वितीयायां च वेधसः।
दशम्यामन्तकस्यापि षष्ठ्यां पूजा गुहस्य च॥
चतुर्थ्यां गणनाथस्य गौर्यास्तत्पूर्ववासरे।
सरस्वत्या नवम्यां च सप्तम्यां भास्करस्य च॥
अष्टम्यां च चतुर्दश्यामेकादश्यां शिवस्य च।
द्वादश्याश्च त्रयोदश्यां हरेश्च मदनस्य च॥
शेषादीनां फणीशानां पञ्चम्यां पूजनं भवेत्।
पर्वणीन्दोस्तिथिष्वासु पक्षद्वयगतास्वपि॥ इति"।

पूजनमित्यस्य सर्वत्रान्वयः। प्रतिपदातिथीनां त्रिरावृत्त्या नन्दादिसंज्ञोक्ता रत्नमालायाम्—

"नन्दा च भद्रा च जया च रिक्ता।
पूर्णेति सर्वास्तिथयः क्रमात्स्युः ॥" इति।

क्रमात् प्रतिपदादितिथिषु वर्ज्यानि उक्तानि पद्मपुराणे—

"क्रमात्कूष्माण्डबृहती तरुणीमूलकं तथा।
श्रीफलश्च कलिङ्गश्च फलं धात्रीभवं तथा॥
नारिकेलमलाबुं च पटोलं वदरीफलम्।
चर्मवृत्ताकवल्ली च शाकं तुलसिजं तथा॥
शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु ॥" इति।

अथ चैत्रशुक्लप्रतिपन्निर्णीयते। संवत्सरारम्भे उदयव्यापिनी ग्राह्या,

"चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्रे तु तदा सूर्योदये सति॥"

इति माधवीयब्राह्मवाक्यात्। दिनद्वये तद्व्याप्तौ पूर्वा, सम्पूर्णत्वात्। अव्याप्तावपि वृद्धवशिष्ठवचनात् पूर्वैव। वचनं त्वग्रे वक्ष्यते।

अत्र ब्रह्मपूजोक्ता मदनरत्ने ब्रह्मपुराणे चैत्रशुक्लप्रतिपत्कृत्योपक्रमे—

"तस्यामादौ च सम्पूज्यो ब्रह्मा कमलसम्भवः ॥" इति।

हेमाद्रौ विष्णुधर्मोत्तरे च—

"चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद्भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासन्तु पूजनम् ॥
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ! ।" इति ।

प्रथमा सर्वतिथीनामाद्या ।

अत्रैव शकादिश्रवणमुक्तं ज्योतिःशास्त्रे भविष्ये—

"चैत्रे मासि महाबाहो पुण्या या प्रतिपत्परा ।
अस्यां वै निम्बपत्राणि प्राश्य संशृणुयात्तिथिम् ॥
शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपतीनाम् ।
श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया ॥" इति

इदं मलमासे न कार्यम्,

"षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्द्धं परित्यज्य कर्तव्या चोत्तरे क्रिया ॥"

इति ज्योतिःशास्त्रे पितामहवचनात् ।

सिन्धुकारास्तु मल एव वत्सरारम्भः कार्य इति निष्कर्षमाहुः, स त्वनिष्कर्ष एव, वाचनिकनिषेधात् ।

इह च वार्षिकनवरात्रारम्भ उक्तो मार्कण्डेयपुराणे—

"शरत्काले महापूजा क्रियते या च वार्षिकी ।
वसन्तकाले सा नोक्ता कार्या सर्वैः शुभार्थिभिः ॥" इति ।

नवरात्रकृत्यं शारदनवरात्रे वक्ष्यते । प्रपादानं चात्रैवोक्तं भविष्ये—

"अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे ।
पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत् ॥" इति ।

दानशब्दोऽत्र उत्सर्गपरः,

"ततश्चोत्सर्जयेद्विद्वान् मन्त्रेणानेन मानवः ।" इति तत्रैवोक्तेः ।

मन्त्रश्च—

"प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता ।
अस्याः प्रदानात् पितरस्तृप्यन्तु हि पितामहाः ॥
अनिवार्यं जलं देयं ततो मासचतुष्टयम् ।
त्रिपक्षं वा महाराज ! जीवानां जीवनं परम् ॥
प्रत्यहं कारयेत्तस्यां भोजनं शक्तितो द्विजान् ।" इति ।

अशक्तेन घटो देय इति तत्रैवोक्तम्—

"प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना ।
प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ॥
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ।" इति ।

घटदाने च मन्त्रः—

"एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात्सकला मम सन्तु मनोरथाः ॥
अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति ।
प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥" इति ।

अस्यां तैलाभ्यङ्गो नित्यः। वचनं त्वग्रे वक्ष्यते।

ज्येष्ठशुक्लप्रतिपत्प्रभृति दशम्यन्तं दशाश्वमेधस्नानेन पापनिवृत्तिरुक्ता काशीखण्डे—

"ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम्।
दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः॥
एवं सर्वासु तिथिषु क्रमात्स्नायी नरोत्तमः।
आ शुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत्॥" इति।

भाद्रशुक्लप्रतिपदि महत्तमाख्यं शिवव्रतमुक्तं स्कन्दपुराणे—

"मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ।
नैवेद्यन्तु पचेन्मौनात् षोडश त्रिगुणानि च॥
फलानि पिष्टपक्वानि दद्याद् विप्राय षोडश।
देवाय षोडश तथा दातव्यानि प्रयत्नतः॥
भुज्यन्ते षोडशैतानि व्रतस्य नियमाश्रयात्।" इति।

रुद्रव्रतत्वादिदं पूर्वविद्धायामेव कार्य्यम्। तदुक्तं ब्रह्मवैवर्त्ते—

"रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः।" इति।

संमुखी सायाह्नव्यापिनी,

"संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा।"

इति माधवीयस्कान्दात्।

आश्विनकृष्णप्रतिपदि महालयश्राद्धारम्भः कार्यः। आश्विनशुक्लप्रतिपदि शरन्नवरात्रारम्भ उक्तो हेमाद्रौ धौम्येन—

"आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् ।
प्रतिपदाक्रमेणैव यावच्च नवमी भवेत् ॥" इति ।

अत्र पूर्वाह्णव्यापिनी ग्राह्या,

"आश्विनस्य सिते पक्षे नवरात्रमुपोषकः ।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ॥"

इति देवीपुराणे तस्य कर्मकालतोक्तेः ।

अह्नः पूर्वो भागः पूर्वाह्णः । स च दिवसस्य पञ्चधा विभागेन त्रिमुहूर्तात्मको ज्ञेयः,

"मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः ।
मध्याह्नस्त्रिमुहूर्तस्यादपराह्णोऽपि तादृशः ॥
सायाह्नस्त्रिमुहूर्तस्तु सर्वकर्मबहिष्कृतः ॥"

इति माधवीयव्यासोक्तेः ।

देवीपुराणेऽपि—

"प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत् ॥" इति ।

यत्तु सिन्धुकारैर्वचनमलेखि—

"भास्करोदयमारभ्य यावत्तु दशनाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणाविधौ ॥"

इति विष्णुधर्मोक्तं तन्महानिबन्धेष्वसत्वाद् भ्रान्तिमूलकमेव । अत्र यानि द्वितीयाऽमावास्यायोगनिषेधकानि वाक्यानि तानि हेमाद्र्यादिष्वसत्वान्निर्मूलानि, परस्परं सत्प्रतिपक्षत्वादनिर्णायकानि

चेत्युपेक्ष्याणि। दिनद्वये पूर्वाह्णकाले सत्त्वेऽसत्त्वे वा निर्विवाद-माद्येन। अत्राद्यनाडीषोडशकं त्यक्त्वा कलशं स्थापयेत्,

"आद्याः षोडशनाड्यस्तु लब्ध्वा यः कुरुते नरः।
कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम्॥"

इति देवीपुराणेऽनिष्टश्रुतेरिति निर्णयामृतकारः।
तदिदं सति सम्भवे ज्ञेयम्। केचित्तु—

"आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा।"

इति तत्रैवोक्तत्वात् षोडश द्वादश वा नाड्यस्त्याज्या इत्यैच्छिक-विकल्पमाहुः। इदं च कलशस्थापनं दिवैव कार्यम्, न रात्रौ स्थापनं कार्यम्; "न च कुम्भाभिषेचनम्" इति मात्स्यनिषेधात्। स्थापने वैधृत्यादियोगनिषेधकानि वाक्यानि तान्यपि निर्मूलानि। अत्राशक्तस्य त्रिरात्रैकरात्रे उक्ते देवीपुराणे—

"नवरात्रव्रतेऽशक्तस्त्रिरात्रं चैकरात्रकम्।
व्रतं चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम्॥" इति।

तच्च त्रिरात्रं सप्तम्यादिदिनत्रये कार्य्यम्।

तदुक्तं हेमाद्रौ धौम्येन—

"त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम्।" इति।

एकरात्रं तु अष्टम्यां कार्य्यम्। तच्च पुत्रवद्गृहस्थभिन्नपरमुक्तं कालिकापुराणे—

"उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्।" इति।

महाष्टमी—आश्विनशुक्लाष्टमी चैत्रशुक्लाष्टमी च।

अथ संक्षेपेण नवरात्रकृत्यम् । तत्रादौ कर्तृनियमा देवीपुराणे—

"कन्यासंस्थे रवौ शक्र ! शुक्लामारभ्य नन्दिकाम् ।
अयाची त्वथ चैकाशी नक्ताशी वाथ वाय्वदः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तः कन्यकां भोजयेन्मुदा ॥"

नन्दिकां प्रतिपदम् । ननु नन्दिकापदेन षष्ठ्येव गृह्यतामिति चेत्, न; तद्ग्रहणे सति नवरात्रत्वव्याघातापत्तेः । शिवा च शिवश्च शिवौ तयोः पूजकः शिवपूजकः । कलशस्थापनप्रकारो यामले—

"शुभाभिर्मृत्तिकाभिश्च पूर्वे कृत्वा तु वेदिकाम् ।
यवान्नं वापयेत्तत्र गोधूमैश्चापि संयुतम् ॥
तत्र संस्थापयेत्कुम्भं विधिना मन्त्रपूर्वकम् ।
सौवर्णं राजतं वापि ताम्रं मृण्मयजं तु वा ॥" इति ।

इदं च कुम्भस्थापनं देवीप्रतिमापूजार्थम्,
'पूज्या मण्डलकुम्भस्था' इति देवीपुराणात् ।

प्रतिमा च हेमादिमयी । तदुक्तं देवीपुराणे—
"हेमराजतमृद्धातु शैलचित्रार्पितापि वा ।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ॥" इति ।

प्रतिमालक्षणञ्च—'चतुर्भुजा महिषारूढा' इत्यादिकं समयमयूखे द्रष्टव्यम् । वेदिकापरिमाणं भविष्ये—

"दुर्गागृहं प्रकर्तव्यं चतुरस्रं सुशोभनम् ।
रहस्यं स्वस्तिकाद्यैश्च चर्चितं वस्त्रमण्डितम् ॥
तन्मध्ये वेदिका कार्या चतुरस्रा समा शुभा" इति ।

अथ पूजाप्रयोगः—

प्रतिपदि पूर्वाह्ने तिलतैलेनाभ्यक्तो यजमानः स्नात्वा देश-कालौ सङ्कीर्त्य नवरात्रपर्यन्तमुपवासाद्यन्यतमनियमोपेतोऽहं दुर्गाप्रीतिद्वारा सर्वापच्छान्तिपूर्वकं दीर्घायुर्विपुलधनपुत्रपौत्रा-द्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्त्तिलाभशत्रुपराजयसर्वाभी-ष्टसिद्ध्यर्थं शारदनवरात्रप्रतिपदि विहितकलशस्थापनदुर्गा-पूजाकुमारीपूजादि करिष्य इति सङ्कल्प्य तदादौ निर्विघ्नता सिद्ध्यर्थं गणपतिपूजनं करिष्ये । प्रथमारम्भे पुण्याहवाचन-मपि कार्य्यम् । तत्कृत्वा, महीद्यौरिति भूमिं स्पृष्ट्वा, ओषधयः संवदन्तेति यवान् निक्षिप्य, आकलशेष्विति कुम्भं संस्थाप्य, इमं मे गङ्गे इति जलेनापूर्य्य, गन्धद्वारामिति गन्धम्, या ओषधीरिति सर्वौषधीः, काण्डादिति दूर्वाः, अश्वत्थेव इति पञ्च पल्लवान्, स्योनापृथिवीति सप्तमृदः, याः फलिनीरिति फलम्, स हि रत्नानीति पञ्चरत्नानि, हिरण्यरूप इति हिरण्यम्, युवं वस्त्राणीति वस्त्रेणावेष्ट्य, पूर्णा दर्वीति कलशोपरि पूर्णपात्रं निधाय, वरुणं सम्पूज्य, हेमादिप्रतिमायां दुर्गां षोडशोपचारैः पूजयेत् । पूजाम-न्त्रस्तु देवीपुराणे—

"जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते॥
अनेनैव तु मन्त्रेण जपहोमादि कारयेत्॥" इति।

तत्रादौ महाकाल्यै नमः, महालक्ष्म्यै नमः, महासरस्वत्यै नमः, प्रभायै नमः, मायायै नमः, जयायै नमः, विशुद्धायै नमः, नन्दिन्यै नमः, सुप्रभायै नमः, विजयायै नमः, सर्वसिद्धिप्रदायै नमः, वज्रनखदंष्ट्रायै नमः। एभिस्त्रयोदशनामभिः पीठपूजां कृत्वा देवीं ध्यायेत्। ध्यानमुक्तं शारदायाम्—

"सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः
शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता।
आमुक्ताङ्गदहारकङ्कणरणत्काञ्ची क्वणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला॥"

इति ध्यात्वा, पूर्वोक्तमन्त्रेण दुर्गायै नमः—अनेनैवावाहनादि पुष्पसमर्पणान्तं कृत्वा अङ्गपूजां कुर्यात्।

दुर्गायै नमः पादौ पूजयामि, कात्यायन्यै नमो गुल्फौ पूजयामि, सावित्र्यै नमो जानुनी पूजयामि, सरस्वत्यै नमो जङ्घे पूजयामि, भद्रकाल्यै नमः कटिं पूजयामि, मङ्गलायै नमो नाभिं पूजयामि, शिवायै नम उदरं पूजयामि, क्षमायै नमो हृदयं पूजयामि, धात्र्यै नमो हस्तौ पूजयामि, स्वधायै नमः कण्ठं पूजयामि, महिषमर्दिन्यै नमो मुखं पूजयामि, नारायण्यै नमो नासिकां पूजयामि, रौद्रायै नमः श्रोत्रे पूजयामि, सिंहवाहिन्यै नमो नेत्रे पूजयामि, कालरात्र्यै

नमो ललाटं पूजयामि, कुमार्यै नमः शिरः पूजयामि, महादेव्यै नमः सर्वाङ्गं पूजयामि। ततो धूपादिपूजां समाप्य, कूष्माण्डादिबलिं निवेद्य, कुमारीपूजा कार्या। तदुक्तं नवरात्रप्रकरणे देवीपुराणे—

"न तथा तुष्यते शक्र ! जपहोमसमाधिना।
कुमारीपूजनेनात्र यथा देवी प्रसीदति॥" इति।

स्कान्देऽपि—

"आयुष्यबलवृद्ध्यर्थं कुमारीं पूजयेन्नरः।" इति।

कुमारीपूजामन्त्रस्तु स्कान्दे—

"मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम्।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्॥
जगत्पूज्ये ! जगद्वन्द्ये ! सर्वशक्तिस्वरूपिणि !
पूजां गृहाण कौमारि ! जगन्मातर्नमोऽस्तु ते॥
कञ्चुकैश्चापि वस्त्रैश्च गन्धपुष्पाक्षतादिभिः।
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः॥" इति।

कुमारीवयःप्रमाणं मदनरत्ने स्कान्दे—

"एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत्।
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते॥
द्विवर्षकन्यामारभ्य दशवर्षावधि क्रमात्।
पूजयेत्सर्वकार्येषु यथाविध्युक्तमार्गतः॥

ब्रह्माणीं सर्वकार्येषु अर्थार्थे नृपवंशजाम् ।
लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् ॥" इति ।

अपूज्यकन्या उक्तास्तत्रैव—

"हीनाधिकाङ्गीं कुष्ठीं च विनाशिकुलसम्भवाम् ।
ग्रन्थिस्फुरितशीर्णाङ्गीं रक्तपूयव्रणाङ्किताम् ॥
जात्यन्धां केकरां काणीं कुरूपां तनुरोमशाम् ।
सन्त्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम् ॥" इति ।

यथोक्तकन्यालाभे तु देवीपुराणे—

"विवाहानन्तरं कन्यां कन्यात्वमुपजायते ।
तावत्संपूजयेत्कन्यां यावत्पुष्पं न दृश्यते ॥" इति ।

ततो देवीं प्रार्थयेत्—

"महिषघ्नि ! महामाये ! चामुण्डे ! मुण्डमालिनि ! ।
द्रव्यमारोग्यविजयं देहि देवि ! नमः सदा ॥"

ततश्च दुर्गाग्रतो मन्त्रं जपेत् । तदुक्तं देवीपुराणे—

"दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहितः ।" इति ।

जपोत्तरं चण्डीपाठोऽपि तत्रैवोक्तः—

"एकोत्तराभिवृद्ध्या तु नवमीं यावदेव हि ।
चण्डीपाठं यजेच्चैव याजयेद्वा विधानतः ॥" इति ।

नवरात्रारम्भोत्तरं सूतके प्राप्ते विशेषो विश्वरूपनिबन्धे—

"आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ।
शावे सूते समुत्पन्ने क्रिया कार्या कथं बुधैः ॥"

इति प्रश्ने कृतमुत्तरम्—

"सूतकं वर्तमाने च तत्रोत्पन्नं यदा भवेत् ।
देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ॥
सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।
देवीमुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते ॥
सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।
तदन्ते भोजयेद्विप्रान् दानं दद्याच्च शक्तितः ॥" इति ।

तदन्ते सूतकान्ते । अत्र प्रारब्धे नवरात्रे सूतकपाते स्वयमेव पूजादि कुर्यादिति विधानादनारब्धे त्वन्येनासगोत्रेण नित्याग्निहोत्रहोमवत् कारयितव्यमिति गम्यते । अपूर्वारम्भस्तु अन्येनापि न भवति, अनारब्धत्वादेव । इदं च देवीपूजनं शुक्रास्तादावपि कार्यमिति तत्रैवोक्तम्—

"अस्तं गते गुरौ शुक्रे सिंहस्थे विबुधाधिपे ।
देवीपूजनमुद्दिष्टं स्थविरे बालके तथा ॥"

देवीपूजनमुद्दिष्टं कर्त्तव्यत्वेनोद्दिष्टमित्यर्थः । तथा च धर्मप्रदीपे—

"नष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ ।
कार्या चैव हि देव्यर्चा प्रत्यब्दं कुलधर्मतः ॥" इति ।

इदं च द्वितीयारम्भपरम् । आद्यारम्भस्तु शुक्रास्तादौ न भवत्येव,

"आद्यारम्भे विरामः स्याद् द्वितीयादौ न चिन्तयेत् ।"

इति समयमयूखे विश्वरूपनिबन्धेनोदाहृतत्वात्। मलमासे तु द्वितीयनवरात्रारम्भोऽपि न भवति। तथा चोक्तं विश्वरूपनिबन्धे—

"मलमासे न कर्त्तव्यं नवदुर्गोत्सवव्रतम्।" इति।

न च नवदुर्गोत्सवव्रतमित्यनेन नूतनदुर्गोत्सवव्रतं मलमासे न कर्तव्यमिति वाच्यम्, नव च ता दुर्गाश्चेति व्युत्पत्त्या नवशब्दस्य संख्यावाचित्वात्।

"नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम्।"

इति स्कान्दात् संख्यावाचित्वमेव न नूतनवाचित्वम्।

अत्र चाधिकारः सर्वेषाम्। तदुक्तं मदनरत्ने भविष्योत्तरे—

"पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे।
शस्तैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्विशैः॥
शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च भुवि मानवैः।
स्त्रीभिश्च कुरुशार्दूल! ........... ॥" इति।

अत्र साश्वपुरुषाणामश्वपूजोक्ता तत्रैव देवीपुराणे—

आश्वयुक् शुक्लप्रतिपत्स्वातियोगे शुभे दिने।
पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमावहत्॥
तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा।
पूजनीयाश्च तुरगा नवमी यावदेव हि।
शान्तिः स्वस्त्ययनं कार्यं तदा तेषां दिने दिने॥" इति।

अस्यामेव अष्टम्यवधि राज्ञां लोहाभिसारिकं कर्म प्रोक्तं मदनरत्ने भविष्ये—

"जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ।
लोहाभिसारिकं कर्म कारयेद् यावदष्टमीम् ॥"

तद्विधानं च तत्रैव—

"प्रागुदक्प्रवणे देशे पताकाभिरलङ्कृते ।
मण्डपं कारयेद्दिव्यं नवसप्तकरं परम् ॥"

नवसप्तकरं षोडशहस्तमित्यर्थः ।

"आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ।
मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया ॥
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।
आनीय मण्डपे तानि सर्वाण्येवाधिवासयेत् ॥
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ।
ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद् घृतम् ॥
शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।
हुतशेषं तुरङ्गाणां राजानमुपहारयेत् ॥
लोहाभिसारिकं कर्म तेनैतदृषिभिः स्मृतम् ।
धृतपल्ययनानश्वानाजांश्च समलङ्कृतान् ॥
भ्रामयेन्नगरे नित्यं नन्दिघोषपुरःसरम् ।
प्रत्यहं नृपतिः स्नात्वा सम्पूज्य पितृदेवताः ॥
पूजयेद्राज्यचिह्नानि फलमाल्यविभूषणैः ।"

राजचिह्नानि शस्त्राश्वादीनि ।

"लोहनामाऽभवत्पूर्वमसुरः सुमहाबलः ।

स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ॥
तदङ्गसम्भवं सर्वं लोहं यद् दृश्यते क्षितौ ।
तस्याभिसरणाद्राज्ञो विजयः समुदाहृतः ॥"

अभिसरणादर्चनात् । इदं च कर्म काम्यम्, जयाभिलाषीतिफलश्रवणात् । अत्र शस्त्रपूजैव प्रधानम्, फलसम्बन्धात् । अथाऽऽयुधादिपूजामन्त्रा मदनरत्ने विष्णुधर्मोत्तरे तत्रादौ छत्रस्य—

"यथाम्बुदश्छादयति शिवायेमां वसुन्धराम् ।
तथा छादय राजानं विजयारोग्यवृद्धये ॥"

अथ चामरस्य—

"शशाङ्ककरसंकाशतीक्ष्णडिण्डिरपाण्डुर ! ।
प्रोत्सारयाशु दुरितं चामरामरदुर्लभ ! ॥"

अथाश्वस्य—

"गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
प्रभावाच्च हुताशस्य वर्द्धय त्वं तुरङ्गमान् ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रत्वं कौस्तुभं च मणिं स्मर ॥
यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा ।
भूमिहाऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।

व्रजाश्व ! तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
विकृतिं यदि गच्छेथा युद्धाध्वनि तुरङ्गम ! ।
रिपून् विजित्य समरे सह भर्त्रा सुखी भव ॥"

अथ ध्वजस्य—

"शक्रकेतो ! महावीर्य्य ! श्यामवर्णार्चयाम्यहम् ।
पत्रिराज ! नमस्तेऽस्तु तथा नारायणध्वज ! ॥
काश्यपेयारुणभ्रातर्नागारे ! विष्णुवाहन ! ।
अप्रमेय ! दुराधर्ष ! रणे देवारिसूदन ! ॥
गरुमन्मारुतगतिस्त्वयि सन्निहितो यतः ।
साश्ववर्माऽऽयुधान् योधान् रक्ष त्वं च रिपून् दह ॥"

अथ पताकायाः—

"हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नरगन्धर्वयक्षभूतगणग्रहाः ॥
प्रथमस्तु सहादित्यैर्भूतेशो मातृभिः सह ।
शक्रः सेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ॥
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिरायुधानि समन्ततः ॥
पतन्तूपरि शत्रूणां हतानि तव तेजसा ।
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ॥
कालनेमिवधे यद्वद् यद्वत् त्रिपुरघातने ।
शोभितोऽसि तथैवाद्य शोभयास्मांश्च संस्मर ॥

नीलश्वेतानिमान् दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
पूतना रेवती नाम्ना कालरात्रिश्च या स्मृता ।
दह चाशु रिपून् सर्वान् पताके ! त्वमथार्चिता ॥"

अथ हस्तिनः—

"कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
मन्दो भद्रो मृगश्चैव गजः संकीर्ण एव च ॥
वने वने प्रसूतास्ते स्मर योनिं महागज !
पान्तु त्वां वसवो रुद्रा आदित्या समरुद्गणाः ॥
भर्तारं रक्ष नागेन्द्र ! स्वामिवत्प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्तिनो व्रज ॥
श्रीस्ते सोमाद् बलं विष्णोस्तेजः सूर्याज्जयोऽनिलात् ।
स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरन्दरात् ॥
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा ॥"

अथ खड्गस्य—

"असिर्विशनसः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥

एतानि नव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका ते तु गुरुर्देवो महेश्वरः ॥
रोहिण्यश्च शरीरं ते दैवतं च जनार्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः कृशोदरः ।
भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च ॥
इयं येन धृता क्षोणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥"

अथ क्षुरिकायाः—

"सर्वायुधानां प्रथमं निर्मितासि पिनाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥
चण्डिकायाः प्रदत्तासि सर्वदुष्टनिवर्हिणी ।
तया विस्तारिता चादिदेवानां प्रतिपादिता ॥
सर्वसत्त्वाङ्गभूतानि सर्वाऽशुभनिवर्हिणी ।
क्षुरिके ! रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥"

अथ कटारिकायाः—

"रक्षाङ्गानि गजान् रक्ष रक्ष वाजिधनानि च ।
मम देहं सदा रक्ष कटारक ! नमोऽस्तु ते ॥"

अथ धनुषः—

"सर्वायुधमहामात्र ! सर्वदेवारिसूदन !
चाप ! मां समरे रक्ष साकं शरवरैरिह ॥

धृतः कृष्णेन रक्षार्थं संहाराय हरेण च ।
त्रयीमूर्तिगतं देव ! धनुरस्त्रं नमाम्यहम् ॥"

अथ कुन्तस्य—

"प्रास ! पातय शत्रूंस्त्वमनया नाकमायया ।
गृहाण जीवितं तेषां मम सैन्यञ्च रक्ष्यताम् ॥"

अथ वर्म्मणः—

"शर्मप्रदस्त्वं समरे वर्म ! सैन्ये यशोद्यमे ।
रक्ष मां रक्षणीयोऽहं तापनेय ! नमोऽस्तु ते ॥"

अथ सुवर्णदण्डस्य—

"प्रोत्सारणाय दुष्टानां साधुसंरक्षणाय च ।
ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥
यशो देहि सुखं देहि जयदो भव भूपतेः ।
ताडयस्व रिपून् सर्वान् हेमदण्ड ! नमोऽस्तु ते ॥"

अथ दुन्दुभेः—

"दुन्दुभे ! त्वं सपत्नानां घोषैर्हृदयकर्षणः ।
भव भूमिपसैन्यानां तथा विजयवर्द्धनः ॥
यथा जीमूतघोषेण प्रहृष्यन्ति च बर्हिणः ।
तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथा तव च शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥"

अथ शङ्खस्य—

"पुण्यस्त्वं शङ्ख ! पुण्यानां मङ्गलानाञ्च मङ्गलम् ।
विष्णुना विधृतो नित्यमतः शान्तिप्रदो भव ॥"

अथ सिंहासनस्य—

"विजयो जयदो जेता रिपुघाती भयङ्करः ।
दुःसहा धर्मदः शान्तः सर्वारिष्टविनाशनः ॥
नमस्ते सर्वतोभद्र ! भद्रदो भव भूपतेः ।
त्रैलोक्यजयसर्वस्व ! सिंहासन ! नमोस्तु ते ॥"

इति पूजामन्त्राः । इयमेव दौहित्रप्रतिपद् । अस्यां मातामहश्राद्धं कार्यम् । तदुक्तं हेमाद्रौ—

"जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥" इति ।

अथ कार्तिकशुक्लप्रतिपत् पूर्वविद्धा ग्राह्या—

"पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ।" इति बृहद्यमोक्तेः ।

अत्रापि तैलाभ्यङ्ग आवश्यक इत्युक्तं वृद्धवसिष्ठेन—

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ॥" इति ।

इयं चाभ्यङ्गे सूर्योदयव्यापिनी ग्राह्या । तदुक्तं ज्योतिर्निबन्धे—

"नन्दायामुदयेऽभ्यङ्गं कृत्वा नीराजनं ततः ।
सुवेशः सन् कथागीतैर्दानैश्च दिवसं नयेत् ॥"

हेमाद्रौ बलिप्रतिपदुपक्रमे—
"तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरं जयः ॥
पराजयो विरुद्धश्चेल्लाभनाशकरो भवेत् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥" इति ।
अत्र कृत्यान्तरं हेमाद्रौ भविष्ये—
"प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् ।
पूजनीयास्तथा गावस्त्याज्ये वाहनदोहने ॥"
पर्वतगवोः पूजामन्त्रौ तत्रैव—
"गोवर्द्धन ! धराधार ! गोकुलत्राणकारक ! ।
बहुबाहुकृतच्छाय ! गवां कोटिप्रदो भव ॥"
"लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।
घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥"
अत्र रात्रौ बलिपूजा कार्य्येत्युक्तं हेमाद्रौ भविष्ये—
"कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतिं बलिम् ।
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ॥
लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजं तु फलैः पुष्पैश्च पूजयेत् ॥"
पूजामन्त्रः पाद्मे—
"बलिराज ! नमस्तुभ्यं दैत्यदानववन्दित !
इन्द्रशत्रोऽमराराते ! विष्णुसान्निध्यदो भव ॥" इति ।

चैत्रकृष्णप्रतिपदि श्वपचस्पर्शो होलिकाविभूतिवन्दनं चूत-कुसुमप्राशनं च कार्यमित्युक्तं भविष्योत्तरे—

"चैत्रे मासि महाबाहो ! पुण्या प्रतिपदा परा ।
यस्तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्याद् द्विजोत्तमः ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ! ॥"

तथा—"प्रवृत्ते मधुमासे तु प्रतिपत्सु विभूतये ॥
कृत्वा चावश्यकार्याणि सन्तर्प्य पितृदेवताः ।
वन्दयेद्धोलिकाभूतिं सर्वदुःखोपशान्तये ॥"

विभूतिवन्दने मन्त्रः—

"वन्दितासि सुरेन्द्रेण वन्दिता शङ्करेण च ।
अतस्त्वं पाहि नो देवि ! विभूते ! भूतिदा भव ॥" इति ।

पुराणसमुच्चये—

"वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ।
संप्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ ! पुरुषोऽथ समां सुखी स्यात्" ॥

समामिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ।

कुसुमप्राशने मन्त्रः—

"दूतमग्र्यं वसन्तस्य माकन्द ! कुसुमं तव ।
सचन्दनं पिबाम्यद्य सर्वकार्यार्थसिद्धये ॥" इति ।

इदं च पूर्वविद्धायामेव कार्यम्—

"वत्सरादौ वसन्तादौ बलिराज्ये तथैव च।
पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ॥"

इति वृद्धवसिष्ठवाक्यात्। अत्र वेधमाह पैठीनसिः—

"पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥" इति।

उदयानन्तरं स्थिता त्रिमुहूर्ता पूर्वतिथिरुत्तरतिथिं विध्यति। अस्तमयात् प्राक्स्थिता त्रिमुहूर्तोत्तरतिथिः पूर्वतिथिं विध्यतीति सामान्यतो वेध इत्यर्थः। हेमाद्र्यादिषु तु—

"उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥"

इति विष्णुधर्मोत्तराद् द्विमुहूर्त्तोऽप्युक्तो वेधः। अस्यार्थः—

भानावुदिते सति यद् द्विमुहूर्तं मुहूर्तद्वयं तद् दैवतं देवकर्मयोग्यम्, एवं रवावस्तमितेऽस्तासन्ने सति अस्तमयात्पूर्वं यदह्नः सम्बन्धि त्रिमुहूर्तं मुहूर्तत्रयं तत् पित्र्यं पितृकर्मयोग्यम्, तस्मात् तद्वर्तिनी तिथिर्हव्यकव्ययोर्ग्राह्येत्यर्थः। वस्तुतस्तु—

"द्विमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी।
द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी ॥"

इति दक्षवचनेऽपिकारपाठाद् द्विमुहूर्तत्वमनुकल्पः।

अयं वेधः प्रातरेव। सायं तु त्रिमुहूर्ताया एव तिथेः सर्वत्र ग्राह्यत्वाभिधानात्।

तदुक्तं स्कान्दे—

"यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः।

सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्तैव या भवेत् ॥" इति।

अस्यां चाभ्यङ्गो नित्यः, पूर्वोक्तवाक्यात्। प्रतिपच्छुक्रेण सिद्धा, बुधभौमाभ्यां विरुद्धा। योगिन्यस्यां पूर्वस्याम्। इति प्रतिपन्निर्णीता—

अथ द्वितीया निर्णीयते। सा शुक्ला परविद्धा ग्राह्या, युग्माग्नीति वचनात्। कृष्णा पूर्वविद्धा ग्राह्या, "द्वितीया प्रतिपद्युता" इत्यापस्तम्बवचनात्। उपवासे तु सर्वापि द्वितीया परैव।

तदुक्तं विष्णुधर्मोत्तरे—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।

त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः ॥" इति।

चैत्रशुक्लद्वितीयायामुमापूजाग्निपूजा च कार्येत्युक्तं भविष्ये—

"चैत्रशुक्लाद्वितीयायामुमापूजा फलार्थिभिः।

शिवपूजाऽग्निपूजा च कर्तव्या मुनिसत्तम ॥" इति।

देवीपुराणेऽपि—

"उमां शिवं हुताशं च द्वितीयायां प्रपूजयेत्।

हविष्यमन्नं नैवेद्यं देयं गन्धार्चनान्वितम् ॥

फलमाप्नोति विप्रेन्द्र! सर्वक्रतुसमुद्भवम् ॥" इति।

ज्येष्ठशुक्लद्वितीया सोपपदा। तदुक्तं कालिकादर्शे—

"सिता ज्येष्ठद्वितीया च आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥"

अत्र वेदाध्ययनादिनिषिद्धमुक्तं नारदीये—

"युगादिषु च सर्वासु तथा मन्वन्तरादिषु ।
अनध्यायं प्रकुर्वीत तथा सोपपदा तिथौ ॥" इति ॥

आषाढशुक्लद्वितीयायां रामयात्रोत्सवः कार्यः ।

तथा च स्कान्दे—

"आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं वै भद्रया सह ॥

यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान् बहून् ।
ऋक्षाभावे तिथौ कार्या यात्रा सा प्रीतये मम ॥" इति ।

श्रावणकृष्णद्वितीया बृहत्तल्पोच्यते । सा पूर्वविद्धा ग्राह्या । तदाह संवर्तः—

"कृष्णाष्टमी बृहत्तल्पा सावित्री वटपैत्रिकी ।
कामत्रयोदशी रम्भा उपोष्या पूर्वसंयुता ॥" इति ।

चातुर्मास्यकृष्णद्वितीयासु चतसृष्वप्यशून्याख्यं व्रतं कुर्यादित्युक्तं निर्णयामृते पुराणसमुच्चये—

"चतुर्ष्वपि पक्षेषु मासेषु श्रावणादिषु ।
अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकम् ॥" इति ।

जया तृतीया। कार्तिकशुक्लद्वितीया यमद्वितीयोच्यते। साऽपराह्णव्यापिनी ग्राह्या, कर्मकालवाक्यात्। तदुक्तं हेमाद्रौ स्कान्दे—

"ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति॥
ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः।
वेष्टितः किन्नरैर्हृष्टैस्तस्मै यच्छति वाञ्छितम्॥" इति।

दिनद्वये कर्मकालव्याप्तावव्याप्तौ वा सामान्यनिर्णयोऽवसेयः। गौडास्तु विशेषमाहुः—

"यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्।
चित्रगुप्तस्य पूजां च कुर्याद् ज्ञानस्य वृद्धये॥
मसीपात्रं लेखनीं च पूजयेच्च प्रयत्नतः।
सर्वान् कामानवाप्नोति यमलोकं न पश्यति॥" इति।

अस्यां भगिनीगृहे भोक्तव्यमित्युक्तं भविष्ये—

"कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर!।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः॥
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता।
अस्यां निजगृहे विप्र! न भोक्तव्यं ततो नरैः॥
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः॥

५

स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः ।
सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नका ॥" इति ।

प्रतिपन्नका मता भगिन्य इति हेमाद्रिरूचे ।

ब्रह्माण्डेऽपि—

"या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।
अर्च्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ॥
भ्रातुरायुःक्षयो राजन् न भवेत्तस्य कर्हिचित् ।"

चैत्रकृष्णद्वितीयायां काममहोत्सव उक्तो भविष्ये—

"ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतः ।
नृपतिर्विततै देशे वितानवरशोभिते ॥
नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवम् ।
एवं कुर्वन्नवाप्नोति यावत्संवत्सरं सुखम् ॥" इति ।

ततः प्रतिपद्युत्सवानन्तरमित्यर्थः । अयं चोत्सवः पूर्वविद्धाया-मेव, "प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता" इति वक्ष्य-माणयुग्मवाक्यात् । द्वितीया बुधेन सिद्धा । शुक्रेण विरुद्धा । अत्र योगिन्युत्तरस्याम् । इति द्वितीया निर्णीता ।

अथ तृतीया निर्णीयते । सा तु परैव । तदुक्तं ब्रह्मवैवर्ते—

"रम्भाख्यां वर्जयित्वैकां तृतीयां द्विजसत्तम ! ।
अन्येषु शुभकार्येषु गणयुक्ता प्रशस्यते ॥" इति ।

'गणः' चतुर्थी। युग्मवाक्यन्तु रम्भाविषयं सर्वविषयत्वे तूदाहृतवचनविरोधस्तस्माद्रम्भाव्रत एव पूर्वा, अन्या सर्वाप्युत्तरैव। उपवासेऽप्ययमेव निर्णयः। तदुक्तं विष्णुधर्मोत्तरे—

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च ता उपोष्या परान्विता॥" इति।

चैत्रशुक्लतृतीयायां दोलोत्सव उक्तो रामार्चनचन्द्रिकायां गारुडे—

"चैत्रे मासि सिते पक्षे तृतीयायां रमापतिम्।
दोलारूढं समभ्यर्च्य मासमान्दोलयेत्कलौ॥" इति।

गौरीतृतीया इयमेव। अस्यां गौरीमीश्वरयुतां सम्पूज्य दोलोत्सवं कुर्यात्। तदुक्तं देवीपुराणे—

"तृतीयायां यजेद्देवीं शङ्करेण समन्विताम्।
आन्दोलयेत्ततो वत्स! शिवया सहितं शिवम्॥" इति।

अस्यामेव मदनरत्ने कालोत्तरे गौरीव्रतमुक्तम्—

"चैत्रशुक्लतृतीयायां व्रतं गौर्य्याः समाचरेत्॥" इति।

अत्र मुहूर्तमात्रापि परा ग्राह्या। तदाह माधवः—

"मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात्॥" इति।

स्कान्देऽपि—

"कला काष्ठापि वा चैव द्वितीया संप्रदृश्यते।
सा तृतीया न कर्तव्या कर्तव्या गणसंयुता॥" इति।

यदा तूत्तरदिने स्वल्पापि तृतीया न लभ्यते, तदा द्वितीया-विद्धैव कार्या;

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धैव कर्तव्या यदि न स्यात्परेऽहनि ॥"

इति वृद्धवसिष्ठोक्तेः । अत्र सौभाग्यव्रतमुक्तं मात्स्ये—

"वसन्तमासमासाद्य तृतीयायां जनप्रिये ! ।
सौभाग्याय सदा स्त्रीभिः कार्यं पुत्रसुखेप्सुभिः ॥" इति ।

मत्स्यजयन्त्यपीयमेव,

"मत्स्योऽभूद्धतभुग्दिने मधुसिते" इति वाक्यात् ।

वैशाखशुक्लतृतीयाऽक्षयतृतीयोच्यते । तदुक्तं भविष्ये—

"या त्वेषा कुरुशार्दूल ! वैशाखे तु महातिथिः ।
तृतीया साऽक्षया लोके गीर्वाणैरभिवन्दिता ॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्वमक्षयं यस्मात्तेनेयमक्षया स्मृता ॥" इति ।

इयं युगादिः । सा पूर्वाह्णव्यापिनी ग्राह्या । तदुक्तं नारदीये—

"द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥" इति ।

वैशाखशुक्लतृतीया कार्त्तिकशुक्लनवमीति शुक्लयुगादी, भाद्रकृष्ण-त्रयोदशी माघमासस्यामेति द्वे कृष्णयुगादी । प्रमाणवचनं तु नवमीप्रकरणे वक्ष्यते । अत्र पूर्वाह्णापराह्णशब्दाभ्यां द्वेधा विभागः प्रतीयते । स च स्कान्दे दर्शितः—

"आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ॥" इति ।
दिनद्वये तत्त्वे परैव । 'युगाद्या वर्षवृद्धिश्च' इति वक्ष्यमाणवचनात्, श्राद्धेऽपि शुक्ला पूर्वाह्णव्यापिनी ग्राह्या,

"पूर्वाह्णे तु सदा ग्राह्याः शुक्ला मनुयुगादयः ।
दैवे कर्म्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ॥"

इति गारुडात् । युगादिमन्वादिश्राद्धेषु शुक्लपक्ष उदयव्यापिनी तिथिर्ग्राह्या, कृष्णपक्षेऽपराह्णव्यापिनीति स्मृत्यर्थसाराच्च । अत्र पितृप्रीत्यर्थं कुम्भदानमुक्तं समयमयूखे देवीपुराणे—

"तृतीयायां तु वैशाखे रोहिण्यर्क्षे प्रपूज्य तु ।
उदकुम्भप्रदानेन शिवलोके महीयते ॥"

कुम्भदाने मन्त्रः—

"एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् तृप्यन्तु पितरो हि पितामहाः ॥
गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं सदक्षिणम् ।
पितृभ्यः सम्प्रदास्यामि अक्षय्यमुपतिष्ठतु ॥" इति ।

एतदसम्भवे गोविन्दार्णवे विष्णुपुराणे—

"पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति ॥" इति ।

अस्यां त्रिलोचनयात्रोक्ता काशीखण्डे—

"राधशुक्लतृतीयायां स्नात्वा पैलिप्पिले ह्रदे ।
सन्तर्पयेत् पितृन् देवान् त्रिलोचनमथार्चयेत् ॥" इति ।

इयमेव परशुरामजयन्ती। सा प्रदोषव्यापिनी ग्राह्या। तदुक्तं स्कान्दे—

"वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ।
निशायां प्रथमे यामे रामाख्यः स महाहरिः॥
स्वोच्चगैः सद्ग्रहैर्युक्ते मिथुने राहुसंयुते।
रेणुकायास्तु यो गर्भादवतीर्णो हरिः स्वयम्॥" इति।

दिनद्वये तद्व्याप्तौ तूत्तरा। अन्यथा पूर्वैव। तदुक्तं भविष्ये—

"शुक्ला तृतीया वैशाखे शुद्धोपोष्या दिनद्वये।
निशायां पूर्वयामे चेदुत्तराऽन्यत्र पूर्विका॥" इति।

दिनद्वये निशायामित्यन्वयः। यदा वैशाखे मलमासस्तदा युगादिप्रयुक्तं कार्यं मल एव कर्त्तव्यम्,

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।" इति ऋष्यशृङ्ग-वचनादिति हेमाद्र्यादयो वदन्ति। स्मृतिचन्द्रिकायां विशेषः—

"यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम्।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च॥" इति।

आपरपक्षिकं कृष्णपक्षसम्भवं न तु महालयश्राद्धम्, 'न कुर्याद्भानुलङ्घितः' इत्यादिना तन्निषेधात्।

ज्येष्ठशुक्लतृतीयायां रम्भाव्रतमुक्तं माधवीये भविष्ये—

"भद्रे! कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम्।
ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा॥" इति।

सा तत्र पूर्वविद्धा ग्राह्या,

"वृहत्तल्पा तथा रम्भा सावित्री वटपैत्रिकी ।

कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः ॥"

इति स्कान्दात् । संमुखी सायाह्नव्यापिनी पूर्वविद्धेति यावत् । भाद्रकृष्णतृतीयायां विशालाक्षीयात्रा कार्या । रात्रौ जागरणविधानादियं रात्रिव्यापिनी ग्राह्या । तदुक्तं काशीखण्डे—

"भाद्रकृष्णतृतीयायामुपवासपरैर्नृभिः ।

कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः ॥" इति ।

इयमेव कज्जली,

"भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका ॥" इति दिवोदासोदाहृतवचनात् । भाद्रशुक्लतृतीया हरितालिका, पूर्वोक्तवचनात् । इयं मुहूर्तमात्रापि गौरीव्रतत्वात् परयुता ग्राह्या,

"मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे ॥" इति माधववचनात् । इयं मन्वादिः, वक्ष्यमाणवचनात् । आश्विनकृष्णतृतीयायां ललितादेव्या यात्रोक्ता काशीखण्डे—

"ईशकृष्णतृतीयायां ललितां प्रतिपूज्य वै ।

नारी वा पुरुषो वापि लभते वाञ्छितं फलम् ॥" इति ।

अत्र गणयुक्ता ग्राह्या, 'रम्भाख्यां वर्जयित्वैकाम्' इति पूर्वमुक्तत्वात् ।

तृतीया भौमेन सिद्धा, बुधेन विरुद्धा । अस्यां योगिन्याग्नेय्याम् । इति तृतीया निर्णीता ।

अथ चतुर्थी निर्णीयते। सा परविद्धा ग्राह्या, युग्मवाक्यात्। उपवासेऽपि परैव,

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥" इति माधवीय-वृद्धवसिष्ठवाक्यात्। विनायकव्रते तु तृतीयायुतैव। तदुक्तं मदनरत्ने ब्रह्मवैवर्ते—

"चतुर्थी तु तृतीयायां महापुण्यफलप्रदा।

कर्त्तव्या व्रतिभिर्वत्स! गणनाथसुतोषिणी॥" इति।

चैत्रशुक्लचतुर्थी विघ्ननाशिनी। तत्र लड्डुकैर्गणेशं पूजये-दित्युक्तं निर्णयामृते देवीपुराणे चतुर्थीप्रकरणे—

"गणेशं कारयेत्पूजां लड्डुकादिभिरादरात्।

चतुर्थ्यां विघ्ननाशाय सर्वकामार्थसिद्धये॥" इति।

गणेशमिति षष्ठ्यर्थे द्वितीया। ज्येष्ठशुक्लचतुर्थ्यां स्त्रीभिः सौभाग्यवृद्धये उमा पूज्येत्युक्तं भविष्ये—

"ज्येष्ठशुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती।

तस्मात्सा तत्र सम्पूज्या स्त्रीभिः सौभाग्यवृद्धये॥" इति।

अत्र सामान्यनिर्णयः। श्रावणकृष्णचतुर्थी सङ्कष्टचतुर्थीत्यु-च्यते। तदुक्तं स्कान्दे—

"श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये।

तस्मिन् दिने व्रतं कार्यं संकष्टाख्यं सुरेश्वरि!॥" इति।

श्रावणोऽत्रामान्तो ज्ञेयः, चान्द्रमासस्य मुख्यत्वात्। विधुश्चन्द्रः।

एतस्मादेव वचनादियं चन्द्रोदयव्यापिनी ग्राह्या। "दिनद्वये चन्द्रोदये सत्त्वेऽसत्त्वे वा मातृविद्धा प्रशस्यते" इति वाक्यशेषात् पूर्वैव। भाद्रकृष्णचतुर्थी बहुलाव्रते पूर्वैव, पञ्चमीयुक्तानिषेधात्। तदुक्तं मदनरत्ने पुराणसमुच्चये—

"गौर्य्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिका च।
वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति नृपं सराष्ट्रम्॥"

इति। अत्र धेनुपूजेति बहुला चतुर्थी गृह्यते। इयं मध्यदेशे प्रसिद्धा। भाद्रशुक्लचतुर्थी सिद्धिविनायकव्रते—

"प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप" इति वचनात्। मध्याह्नस्य पूजाकालत्वात् मध्याह्नव्यापिन्येव ग्राह्या। बृहस्पतिरपि—

"चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि॥" इति।

"दिनद्वये तद्व्याप्तावव्याप्तौ वा मातृविद्धा प्रशस्यते" इति वाक्यात् पूर्वैव। परेद्युरेव यदा मध्याह्नव्यापिनी, तदा मातृविद्धत्वगुणाभावेऽपि प्रधानप्रयोजकानुसारेण परैव ग्राह्या,

"मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके।
मध्याह्नात्परतश्चेत्स्यान्नागविद्धा प्रशस्यते॥"

इति माधवीयस्मृत्यन्तरात्। यदोभयदिनेऽपि वैषम्येण मध्याह्नैकदेशव्यापिनी, तदा पूर्वदिने तन्महत्त्वं चेत्, सैव ग्राह्या। उत्तरदिने

तन्महत्त्वे किं महत्त्वगुणोपेतोपादेया ? किं वा मातृविद्धत्व-गुणोपेता पूर्वोपादेया ? इति संशये पूर्वैवेति प्रतीमः, न्याया-द्वाचनिकस्य मातृविद्धत्वगुणस्य बलीयस्त्वात् । अत्र चन्द्रदर्शन-निषेधमाह पराशरः—

"कन्यादित्ये चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम् ।
मिथ्याभिदूषणं कुर्याद्रात्रौ पश्येन्न तं सदा ॥
तद्दोषशान्तये सिंहः प्रसेनमिति वै पठेत् ।" इति ।

अत्र रात्रिग्रहणाद् दिवा चन्द्रदर्शने न दोष इति निर्णयामृतका-रादयः । युक्तं तु—

"भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी ।
मिथ्याभिशापं कुरुते दृष्टचन्द्रा न संशयः ॥"

इति मार्कण्डेयादिवचनान्तरेषु चतुर्थीमात्रग्रहणाद् दिवापि चन्द्रो न द्रष्टव्य इति प्रतिभाति । प्रमादाच्चन्द्रदर्शने तद्दोषशान्त्यर्थं प्राङ्मुख उदङ्मुखो वा पौराणं वाक्यं पठेत् । तच्च—

"सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारकमारोदीस्तव ह्येष स्यमन्तकः ॥" इति ।

इयं भौमेनाऽर्केण वा युक्ताऽतिप्रशस्तेत्युक्तं गोविन्दार्णवे वाराहे—

"भाद्रशुक्लचतुर्थी या भौमेनाऽर्केण वा युता ।
महती साऽत्र विघ्नेशमर्चित्वेष्टं लभेन्नरः ॥" इति ।

इयमेव शिवाख्येत्युक्तं भविष्ये—

"शिवा शान्ता सुखा राजन् ! चतुर्थी त्रिविधा स्मृता ।
मासि भाद्रपदे शुक्ला शिवलोकप्रपूजिता ॥
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।
क्रियमाणं शतगुणं प्रसादाद्दन्तिनो नृप ! ॥" इति ।

मार्गशुक्लचतुर्थी वरचतुर्थी । तस्यां सर्वार्थसाधकमब्दचतुष्टय-साध्यं व्रतमुक्तं स्कन्दपुराणे—

"चतुर्थ्यां मार्गशीर्षे तु शुक्लपक्षे नृपोत्तम ! ।
प्रारभ्य प्रतिमासं च चतुर्थ्यां गणनायकम् ॥
सम्पूज्य विधिना कुर्यादेकभक्तं समाहितः ।
अक्षारलवणं त्वेवं पूर्णे संवत्सरे ततः ॥
द्वितीये वत्सरे चाऽथ नक्तं प्रति चतुर्थिकाम् ।
कुर्याद् गणेशमभ्यर्च्य तृतीयेऽयाचितं तथा ॥
एवमेव प्रकुर्वीत चतुर्थे स्यादुपोषणम् ।
ततश्चतुर्थे सम्पूर्णे तदुद्यापनमाचरेत् ॥
इदं वरचतुर्थ्याख्यं व्रतं सर्वार्थसाधकम् ॥" इति ।

अत्र प्रथमवर्षे एकभक्तमुक्तं तत्स्वरूपमाह देवलः—

"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥" इति ।

ननु भोजनं ग्रासत्रयेण न्यूनं कथं ज्ञातव्यमिति चेत्, शृणु—

"भोजनं तु विधिप्राप्तं द्वात्रिंशद्ग्राससंमितम् ।"

'तद् ग्रासत्रयेण न्यूनम्'—इत्यन्त्यपादेनोच्यते। तेनैकभक्ते एकोनत्रिंशद् ग्रासा इति फलितोऽर्थः। भोजने द्वात्रिंशद्ग्रासादि-नियमस्तु मत्कृताचारार्के द्रष्टव्यः। पद्मपुराणे—

"मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः"। इति।

बौधायनोऽपि—

"उदये तूपवासस्य नक्तस्यास्तमये तिथिः।
मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः॥" इति।

अत्र त्रेधा विभक्तस्याह्नो मध्यमभागो मध्याह्नः, "पूर्वाह्णे देवा अशनमभिहरन्ति मध्यन्दिने मनुष्या अपराह्णे पितरः" इति श्रुतेः। तत्रापि दिनार्द्धोत्तरमवशिष्टं मध्याह्नभागे कार्यम्, 'दिनार्द्धसमयेऽतीते' इति देवलोक्तेः। दिनद्वयेऽपि मध्याह्न-व्याप्तावेकदेशसमव्याप्तौ वा युग्मवाक्यान्निर्णयः। अयञ्च निर्णयः स्वतन्त्रैकभक्तविषयः। अन्यव्रताङ्गभूतमेकभक्तं तत्तिथावेव भवति। द्वितीये नक्तमुक्तम्, तच्चाहरशनं वर्जयित्वा रात्रौ भोक्तव्यमिति नियमस्वरूपम्। तत्कालमाह व्यासः—

"त्रिमुहूर्तप्रदोषः स्याद भानावस्तं गते सति।
नक्तं तत्र प्रकुर्वीत इति शास्त्रस्य निश्चयः॥" इति।

नक्तशब्दो भोजनपरः। अत्र केचित्—

"चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्॥"

इति वचनात्—"सायं सन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः"।
इति स्कान्दोक्तसन्ध्यायां भोजनं निषिद्धमित्याहुः, तदशुद्धम्,
सूर्यनक्षत्रवर्जितकालरूपमुख्यसंध्याकालत्यागे मानाभावात्।
तदाह योगियाज्ञवल्क्यः—

"अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः।

सा तु सन्ध्या समाख्याता ऋषिभिस्तत्त्वदर्शिभिः॥" इति।

हेमाद्रौ स्मृत्यन्तरेऽपि—

"नक्षत्रदर्शनात्सन्ध्या सायं तत्परतः स्थितम्।

तत्परा रजनी ज्ञेया तत्र धर्मान् विवर्जयेत्॥" इति।

अस्तु वा घटिकात्रयं सन्ध्यापदवाच्यम्। तथापि तत्र रागप्राप्तं
भोजनं निषिद्धम्, ननु वैधम्, विधिस्पृष्टे निषेधानवकाशात्।
एतेन पर्वादिरात्रिभोजननिषेधोऽपि प्रत्युक्तः।

वत्सः—

"प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।

एकादशीं विना सर्वा शुक्ले कृष्णे विशेषतः॥" इति।

हरिनक्तव्रते तूदयव्यापिनी ग्राह्या। तदुक्तं माधवीये स्कान्दे—

"प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।

उदयस्था सदा पूज्या हरिनक्तव्रते तिथिः॥" इति।

यदा नक्ततिथिः पूर्वापरयोरह्नोः प्रदोषं व्याप्नोति, तदा परा ग्राह्या,
"यदि स्यादुभयोस्तिथ्योः" इति वक्ष्यमाणजाबालिवच-

नात् । यदोभयत्रापि न प्रदोषव्यापिनी, तदापि परैव ग्राह्या । परन्तु दिवैव आत्मच्छायाद्वैगुण्यकाले नक्तं कार्यं न रात्रौ । तदुक्तं स्कान्दे—

"प्रदोषव्यापिनी न स्याद् दिवा नक्तं विधीयते ।
आत्मनो द्विगुणच्छायामतिक्रामति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजि क्रियाम् ॥
कुर्यान्नक्तव्रती नक्तफलं भवति निश्चितम् ॥" इति ।

यदा नक्ततिथिः पूर्वदिने प्रदोषे सम्पूर्णा, परदिने तत्र स्वल्पा, तदापि परैव ग्राह्या; नक्तस्य दिवारात्रिव्रतत्वेन दिवारात्रिस्पृशि तत्तत्तिथौ कर्त्तव्यत्वात् ।

सप्तमी भानुवारादौ सौरनक्तव्रते तु सुमन्तुः—

"त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥" इति ।

भोजनकालः कौर्मे—

"नरस्य द्विगुणच्छायामतिक्रामेद् यदा रविः ।
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ॥" इति ।

सौरनक्तं भविष्यत्पुराणे दर्शितम्—

"ये चादित्यदिने ब्रह्मन् ! नक्तं कुर्वन्ति मानवाः ।
दिनान्ते तेऽपि भुञ्जीरन् निषेधो रात्रिभोजने ॥" इति ।

यतेर्विधवायाश्च दिवैव नक्तमुक्तं स्मृत्यन्तरे—

"नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।
यतिश्च विधवा चैव कुर्यात्तु सदिवाकरम् ॥
सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये ।" इति ।

व्यासः—

"हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥"

तृतीयेऽयाचितम् । तच्चास्मिन्नहोरात्रेऽयाचितमन्नं न भोक्ष्ये—इति सङ्कल्परूपम् ।

अयाचितान्नभोजनफलमुक्तं माधवीये स्मृत्यन्तरे—
'अयाचिताशीमितभुक् परां सिद्धिमवाप्नुयाद् ।' इति ।

अत्र तिथिनिर्णयमाह नारदः—

"एकभक्तायाचितयोर्या त्रिंशद्घटिकावधिः ।
सा तिथिः सर्वदा ज्ञेया नक्ते सायाह्नसंयुता ॥" इति ।

सर्वदा सकलेत्यर्थः । चतुर्थे तूपवासः ।

एवं कृते यथोक्तफलसिद्धिर्भवति । माघकृष्णचतुर्थ्यां सङ्कष्टचतुर्थीव्रतारम्भ उक्तो भविष्योत्तरे—

"माघे मासे कृष्णपक्षे चतुर्थ्यां व्रतमुत्तमम् ।
प्रतिमासं प्रकुर्वीत व्रतं सङ्कष्टनाशनम् ॥" इति ।

माघकृष्णचतुर्थ्यां व्रतारम्भं कृत्वा प्रतिमासं कार्यमित्यर्थः। इयं चन्द्रोदयव्यापिनी ग्राह्या,

"पूजा विधूदये कार्या सिन्दूरेण प्रपूजयेत्।"

इति तत्रैवोक्तेः। माघः पूर्वोक्तरीत्या चान्द्रो बोध्यः। माघ-शुक्लचतुर्थी तिलचतुर्थी। तदुक्तं काशीखण्डे—

"माघशुक्लचतुर्थ्यान्तु नक्तव्रतपरायणः।
ये त्वां धुण्डेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम्।
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्॥
शुक्लान् तिलान् गुडैर्बद्ध्वा प्राश्नीयाल्लड्डुकान् व्रती।"

इयं प्रदोषव्यापिनी ग्राह्या, नक्तग्रहणात्। तापसीं माघीम्। इयमेव कुन्दचतुर्थीत्युक्तं देवीपुराणे—

"माघमासे तु सम्प्राप्ते चतुर्थीकुन्दसंज्ञिता।
सा तूपोष्या सुरश्रेष्ठ! ततो राज्यं भविष्यति॥" इति।

अथ फाल्गुनादिचतुर्षु मासेषु चतुर्थीव्रतमुक्तं वाराहपुराणे—

"अथ विघ्नव्रतं राजन्! कथयामि शृणुष्व तत्।
चतुर्थ्यां फाल्गुने मासि गृहीतव्यं व्रतं त्विदम्॥
नक्ताहारेण राजेन्द्र! तिलान्नं पारणं स्मृतम्।
तदैवाग्नौ च होतव्यं तद्देयं ब्राह्मणेषु च॥
चातुर्मास्यव्रतं चैव कृत्वैवं पञ्चमे तथा।
सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत्॥

एवं कृत्वा व्रतं चैव सर्वविघ्नैर्विमुच्यते ।"

पूजादिमन्त्रस्तत्रैव—

"दिव्याय शूराय गजाननाय लम्बोदरायैकरदाभिधाय ।
नागात्मजादेहसमुद्भवाय कुठारहस्ताय नमो वराय ॥"

अनेन मन्त्रेण पूजां कृत्वा, स्वाहान्तेन तिलान् हुत्वा, ब्राह्मणेभ्योऽपि दत्वा, स्वयमपि तदेव नक्तकालेऽश्नीयात् । अन्ते सौवर्णीं प्रतिमां सम्पूज्य ब्राह्मणाय दद्यात् । अत्राविशेषाद् व्रतारम्भे शुक्लचतुर्थी ग्राह्या । एतानि व्रतान्यप्यविशेषात् 'चतुर्थी तु तृतीयायाम्' इति सामान्यवाक्यात् तृतीयायुक्तचतुर्थ्यां कार्याणि । चतुर्थी शनिवारेण सिद्धा । गुरुवारेण विरुद्धा । योगिन्यत्र नैरृत्याम् । इति चतुर्थी निर्णीता ।

अथ पञ्चमी निर्णीयते । सा तु चतुर्थीयुतैव ग्राह्या, 'युग्माग्नीति' वचनात्;

"पञ्चमी तु तथा कार्या चतुर्थीसंयुता विभो !"

इति माधवीये स्कान्दवाक्याच्च । अत्र हेमाद्रिमते कृष्णा पञ्चमी पूर्वा, सिता परा, "कृष्णा पूर्वयुता सिता परयुता स्यात् पञ्चमी" इति दीपिकोक्तेः । तदिदं हेमाद्रिमतं शिथिलम्,

"चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते ॥"

इति माधवमदनरत्नादिसर्वनिबन्धकारलिखितहारीतवचनात् ।

"पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद ।"

इति ब्रह्मवैवर्तवचनं तत्—

"स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता ।
त्रिमुहूर्ता तु षष्ठ्यां स्यात् परा पूर्वयुताऽन्यथा ॥"

इति तत्रैवोक्तत्वात्स्कन्दोपवासविषयम् ।

न च युग्मवचनं 'पञ्चमी तु तथा' इति स्कान्दवचनं कृष्णपञ्चमी-विषयम्, 'पञ्चमी तु प्रकर्तव्या' इति तु शुक्लपञ्चमीविषयम्,

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥"

इति मार्कण्डेयवचनादेवं व्यवस्थाकर्तव्येति वाच्यम्; हारीतेन पक्ष-द्वयेऽपि चतुर्थीविद्धाया एव पञ्चम्याः समादिष्टत्वात् । उपवासे तु स्कन्दोपवासपञ्चमी व्यतिरिक्ता सर्वापि पञ्चमी पूर्व-विद्धैव ग्राह्या,

"प्रतिपत्पञ्चमी चैव उपोष्याः पूर्वसंयुता ।" इति जाबालि-वचनात् । उपवासस्तु सर्वतिथिषु माधवीये नारदीये दर्शितः ।

"शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतांस्तिथीन् ।
उपोष्यैव बलिं दत्वा विधिनेत्यपरे दिने ॥
ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ।" इति ।

चैत्रशुक्लपञ्चम्यां श्रीपूजोक्ता हेमाद्रौ मात्स्ये—

"शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना ।

श्रीब्रह्मलोकान्मानुष्यं सम्प्राप्ता केशवाज्ञया ॥
ततस्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति ।" इति ।

इयं कल्पादिरपि । कल्पादयस्तु हेमाद्रौ मात्स्ये—

"वैशाखस्य तृतीया या कृष्णा या फाल्गुनस्य च ।
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथा परा ॥
शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी ।
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ॥
कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः ।"

अत्राविशेषाद् युगादिवन्निर्णयो ज्ञेयः । श्रावणशुक्लपञ्चमी नागपञ्चमी । सा परविद्धेत्युक्तं चमत्कारचिन्तामणौ—

"पञ्चमी नागपूजायां कार्य्या षष्ठीसमन्विता ।
तस्यां तु तुषिता नागा इतरा सचतुर्थिका ॥" इति ।

प्रतापमार्तण्डे स्मृत्यन्तरेऽपि—

"श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता विभो ! ॥" इति ।

अत्र तां परित्यज्य चतुर्थीयुक्ता ग्राह्येत्युक्त्या नागपञ्चम्याश्चतुर्थीविद्धाया निषेधावगमात् त्रिमुहूर्तचतुर्थीयुक्ता नागपञ्चमीव्यतिरिक्ता सर्वा पञ्चमी पूर्वा, परेद्युस्त्रिमुहूर्ता नागपञ्चमी परा, अन्यथा पूर्वैव । अत्र नागपूजनमुक्तं गोविन्दार्णवे भविष्ये—

"श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ! ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥

पूजयेद्विधिवद् वीर! दधिदूर्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान् भक्तिपुरस्सराः ।
न तेषां सर्पतो वीर! भयं भवति कुत्रचित् ॥" इति ।

अस्यां नागकुण्डे स्नानमुक्तं काशीखण्डे—

"यः स्नातो नागपञ्चम्यां कुण्डे वासुकिसंज्ञके ।
न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः ॥
कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै ।
नागाः प्रसन्ना जायन्ते कुले तस्यापि सर्वदा ॥" इति ।

भाद्रशुक्लपञ्चमी ऋषिपञ्चमी । इयं त्वविशेषात् "पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः" इति माधवीये हारीतोक्तेर्मध्याह्नव्यापिनी ग्राह्या । दिनद्वये मध्याह्नव्याप्तिसत्त्वेऽसत्त्वे वा सामान्यनिर्णयात् पूर्वा । अत्र ऋषिपूजनमुक्तं ब्राह्मे—

"नभस्य शुक्लपक्षे तु यदा भवति पञ्चमी ।
नद्यादिके तदा स्नात्वा कृत्वा नियममेव च ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वापि वरानने! ।
कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः ॥
वेदिं सम्यक् प्रकुर्वीत गोमयेनोपलिप्य ताम् ।
तत्र सप्त ऋषीन् दिव्यान् भक्तियुक्तान् (क्तः?) प्रपूजयेत् ॥"

ऋषयश्च—

"कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥" इति ।

आश्विनशुक्लपञ्चम्यामुपाङ्गललिताव्रतम् । तन्मध्याह्नव्यापिन्यां कार्यम्, 'पूजाव्रतेषु सर्वेषु' इति पूर्वलिखितहारीतवचनात् । दिनद्वये तद्व्याप्तावव्याप्तौ वा युग्मवाक्यात् पूर्वा । अस्मिन् व्रते पूजैव प्रधानम् ।

"मत्पूजनकरण्डस्य प्रार्थयस्व पिधानकम् ।
तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि ॥"

इति कथान्तर्गतवचनात् । पूजायाः फलसम्बन्धावगमाद् जागरणादीनां "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायेन तदङ्गत्वं बोध्यम् । ये तु—

"भुक्त्वा जागरणे नक्तचन्द्रार्घ्यव्रते तथा ।
ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यते ॥"

इति हेमाद्रिलिखितवचनाद् अत्र रात्रिव्यापिनी ग्राह्येत्याहुः, तन्न मनोहरम्, अस्य व्रतस्योक्तजागरणादिव्रतेभ्योऽतिरिक्तत्वाद्, अङ्गानुरोधेन प्रधानकालनिर्णयस्य क्वाप्यदृष्टत्वाच्च । 'अभुक्त्वा' इति तु वचनं जागरणप्रधाने कोजागरादिव्रते सावकाशमिति । अत्रैवेन्द्राण्या सह कुशमयं नागं प्रपूजयेदित्युक्तं निर्णयामृते भविष्ये—

"तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ! ।
कृत्वा कुशमयं नागमिन्द्राण्या सह पूजयेत् ॥" इति ।

मार्गशुक्ला पञ्चम्यपि नागपञ्चमी । तदुक्तं हेमाद्रौ स्कान्दे—

"शुक्ले मार्गशिरे पुण्या श्रावणे या च पञ्चमी ।
स्नानदानैर्बहुफला नागलोकप्रदायिनी ॥" इति ।

इयं च 'पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता' इति पूर्वोक्त-चमत्कारचिन्तामणिवचनात् परयुता ग्राह्या ।

माघशुक्लपञ्चमी श्रीपञ्चमी । तत्र श्रीपूजा कार्या । तदुक्तं हेमाद्रौ वाराहे—

"माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजां कुर्यात्समृद्धये ॥" इति ।

अत्र मदनं सम्पूज्य वसन्तोत्सवः कार्यः । तदुक्तं निर्णयामृते पुराणसमुच्चये—

"माघमासे नृपश्रेष्ठ ! शुक्लायां पञ्चमीतिथौ ।
रतिकामौ तु सम्पूज्य कर्तव्यः सुमहोत्सवः ॥
दानानि च प्रदेयानि तेन तुष्यति माधवः ।"

पञ्चमी गुरुवारेण सिद्धा । शनिवारेण विरुद्धा । योगिन्यत्र दक्षिणस्याम् । इति पञ्चमी निर्णीता ।

अथ षष्ठी निर्णीयते । सा स्कन्दव्रतातिरिक्ता सप्तमीयुता कार्या । तदुक्तं स्कान्दे—

"नागविद्धा न कर्तव्या षष्ठी चैव कदाचन ।
सप्तमीसंयुता कार्या षष्ठी धर्मार्थचिन्तकैः ॥" इति ।

पञ्चम्यादिवेधस्तत्रैव—

"नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा ।

भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥" इति ।

नागः पञ्चमी । भूतश्चतुर्दशी । दिग् दशमी । नाड्यो घटिकाः । अयं विशेषवेध उत्तरतिथिविषयः । सामान्यविहितस्तु त्रिमुहूर्तवेधः पूर्वतिथिविषयः । तदुक्तं कौर्मे—

"चतुर्दशी पञ्चमी च तथा च दशमी तिथिः ।

पूर्वां तिथिं दूषयन्ति त्रिभिरेव मुहूर्त्तकैः ॥" इति ।

यदा तिथिक्षयवशादुत्तरविद्धा न लभ्यते, तदा स्कन्दव्रतवद् व्रतान्तरमपि नागविद्धायां कार्यम् । तदाह माधवीये वसिष्ठः—

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धा तु कर्त्तव्या यदि न स्यात्परेऽहनि ॥" इति ।

उपवासेऽपि परैव, 'एकादशाष्टमी' इति पूर्वोदाहृतवचनात् । सामान्यतः सर्वषष्ठ्यां रविवारयोगे लोलार्कयात्रा कार्या ।

"कृतानि यानि पापानि नरैः संवत्सरादपि ।

नश्यन्ति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात् ॥"

इति काशीखण्डे उक्तत्वात् । लोलो लोलार्कः ।

आषाढशुक्लषष्ठी स्कन्दषष्ठी । सा पञ्चमीयुता कार्या,

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।

एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥"

इति स्कान्दात् । अस्यां स्कन्दपूजोक्ता वराहपुराणे—

"आषाढशुक्लषष्ठी तु तिथिः कौमारिका स्मृता ।
कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने ॥" इति ।

भाद्रकृष्णषष्ठी रोहिणीव्यतीपातभौमवारैर्युक्ता कपिलेत्युच्यते । तदुक्तं समयमयूखे वराहपुराणे—

"नभस्ये कृष्णपक्षे या रोहिणीपातभूसुतैः ।
युक्ता षष्ठी पुराणज्ञैः कपिला सा प्रकीर्तिता ॥
व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।
कपिलां च द्विजाग्र्याय दत्वा या क्रतुफलं लभेत् ॥" इति ।

पुराणसमुच्चयेऽपि—

"भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ॥
संयोगे तु चतुर्णां तु निर्दिष्टा परमेष्ठिना ।" इति ।

भाद्रोऽत्र अमातो बोध्यः, चान्द्रमासस्य सर्वकार्येषु मुख्यत्वात्, पूर्णिमान्तभाद्रकृष्णषष्ठ्यां व्यतीपातपातासम्भवाच्च । अत्र सूर्यस्य हस्तस्थितत्वं सति सम्भवे ज्ञेयम्, चतुर्णामित्युपादानात् । अन्यथा वचने पञ्चानामित्युक्तं स्यात् । चतुर्ष्वप्येकन्यूनत्वे कपिलषष्ठी न भवति, चतुर्णां संयोग इत्युक्तेः । इयमेव चन्द्रषष्ठीत्युक्तं भविष्ये—

"तद्वद्भाद्रपदे मासि षष्ठी पक्षे सितेतरे ।
चन्द्रषष्ठीव्रतं कुर्यात् पूर्ववेधः प्रशस्यते ॥" इति ।

इयं चन्द्रोदयव्यापिनी ग्राह्या । हलषष्ठ्यपीयम् । सा सप्तमी-युता ग्राह्येति ग्रन्थान्तरे । भाद्रशुक्लषष्ठी सूर्यषष्ठी । अस्यां भास्करपूजनं महाफलम् । तदुक्तं निर्णयामृते भविष्योत्तरे—

"शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ।
प्राशनं पञ्चगव्यस्य अश्वमेधफलप्रदम् ॥" इति ।

अस्यामेव दक्षिणापथस्थकार्त्तिकेयदर्शनफलमुक्तं तत्रैव—

"येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ! ।
इयं पापहरा पुण्या शिवा शान्ता शुभा नृप ! ॥
स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते ।
अस्यां पश्यन्ति गाङ्गेयं दक्षिणापथमाश्रितम् ॥
ब्रह्महत्यादिपापैस्तु मुच्यन्ते नात्र संशयः ।" इति ।

आश्विनशुक्लषष्ठ्यां दिवसत्रयसाध्यं पूजाङ्गत्वेन विल्वाभि-मन्त्रणं कुर्यात् । तदुक्तं देवीपुराणे—

"ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां विल्वाभिमन्त्रणम् ।
सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढयुताष्टम्यां पूजाहोमाद्युपोषणम् ।
उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ॥
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ।" इति ।

अथाऽऽमन्त्रणप्रकारः—विल्वाभ्यासं गत्वा, विल्वं सम्पूज्य, नाममन्त्रेण विल्ववृक्षे दुर्गां च सम्पूज्य प्रार्थयेत्। तत्र मन्त्रः—

"रावणस्य वधार्थाय रामस्यानुग्रहाय च।
अकाले ब्रह्मणा बोधो देव्यास्तव कृतः पुरा॥
अहमप्याश्रितः षष्ठ्यां सायाह्ने बोधयाम्यतः।"

अथाऽऽमन्त्रणमन्त्रः—

"श्रीशैलशिखरे जातः श्रीफल! श्रीनिकेतनः।
नेतव्योऽसि मया वृक्ष! पूज्यो दुर्गास्वरूपतः॥" इति।

आनयनप्रकारः सप्तम्यां वक्ष्यते। कार्त्तिकशुक्लषष्ठ्यां वह्निपूजोक्ता कालादर्शे मत्स्यपुराणे—

"वृश्चिकार्के शुक्लषष्ठी भौमवारेऽप्युपस्थिते।
महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः॥
तस्यां स्वपिति वै वह्निः पूर्वत्रोपोष्य वै दिने।
षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वह्निमहोत्सवम्॥" इति।

वृश्चिकार्के कार्त्तिक इति तत्रैव व्याख्यातम्। मार्गशुक्लषष्ठी योगविशेषेण चम्पाषष्ठी। तदुक्तं मल्लारिमाहात्म्ये—

मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता।
रविवारेण संयुक्ता सा चम्पेतीह कीर्तिता॥

वैधृतियोगकथनं तु भाद्रशुक्लषष्ठ्यभिप्रायेण, अस्यां वैधृतियोगस्य सर्वथाऽसम्भवात्। अस्यां विश्वेश्वरदर्शनमुक्तं तत्रैव—

"मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंऽशुमालिनः ।

शततारागते चन्द्रे लिङ्गं स्याद् दृष्टिगोचरम् ॥" इति ।

स्यादित्यनेन दृष्टिगोचरं कर्त्तव्यमित्युच्यते । इयमुक्तयोगयुता पूर्वा, योगाभावे सप्तमीयुता ग्राह्याऽविशेषात् । इयमपि स्कन्दषष्ठी । तदुक्तं निर्णयामृते भविष्योत्तरे—

"येयं मार्गशिरे मासि षष्ठी भरतसत्तम ! ।

पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया ॥

निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् ।

रराज तेन दयिता कार्त्तिके तस्य सा तिथिः ॥

स्नानदानादिकं कर्म तस्यामक्षय्यमुच्यते ।" इति दिक् ।

षष्ठी शुक्रेण भौमेन वा सिद्धा । शनिवारेण विरुद्धा । योगिन्यत्र पश्चिमायाम् । इति षष्ठी निर्णीता ।

अथ सप्तमी निर्णीयते । सा पूर्वा उक्ता स्कान्दे—

"षष्ठ्या युता सप्तमी च कर्त्तव्या तात ! सर्वदा ।" इति ।

उपवासेऽपि पूर्वा, 'एकादशी तथा षष्ठी' इति पूर्वोदाहृतवचनात् ।

चैत्रशुक्लसप्तम्यां श्रीभास्करं दमनकादिभिः सम्पूज्य भोगानाप्नोतीत्युक्तं निर्णयामृते देवीपुराणे—

"भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः ।

कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः ॥" इति ।

वैशाखशुक्लसप्तमी गङ्गासप्तमी । अस्यां गङ्गापूजनं कार्यमित्युक्तं ब्राह्मे—

"वैशाखे शुक्लसप्तम्यां जह्नुना जाह्नवी स्वयम् ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ।" इति ।

विशेषवचनाभावादियं पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वये तद्-व्याप्तावव्याप्तौ वा सामान्यनिर्णयात्पूर्वैव ।

आषाढशुक्लसप्तम्यां सूर्यपूजोक्ता निर्णयामृते ब्रह्मपुराणे—

"आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः ।
जातः पूर्वासु तस्मात्तं तत्रोपोष्य यजेत्सदा ॥
रथचक्राकृतौ रम्ये मण्डलं सर्वकामदम् ।
भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपैर्विलेपनैः ॥" इति ।

आश्विनशुक्लसप्तमी देवीपूजने श्रीसूर्योदययुता ग्राह्या । तदुक्तं प्रतापमार्तण्डे भविष्ये—

"युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तासु तिथियुग्मता ॥" इति ।

वर्षवृद्धिर्जन्मतिथिः । दिनद्वये उदयव्याप्तिसत्त्वे सम्पूर्णत्वात्पूर्वा । दिनद्वयेऽपि तादृशकालेऽसत्त्वे षष्ठीयुक्तैव ग्राह्या । अस्यामेव त्रिरात्रारम्भः कार्यः,

"त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रमम् ।" इति धौम्योक्तेः । अत्र सावित्रीव्रतवन्नवम्यनुरोधेन त्रिरात्रं कार्यमिति केचित् । युक्तं तु प्रतिपन्नवरात्रारम्भवत् सप्तम्यामेवारम्भणीयमिदम् । तदुक्तं भविष्योत्तरे—

"व्रती च पूजयेद्देवीं सप्तम्यादिदिनत्रये ।
द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः ॥
भवानीतुष्टये पार्थ ! संवत्सरसुखाय च ।
भूतप्रेतपिशाचानां नाशार्थं चोत्सवाय च ॥" इति ।

इदं त्रिरात्रानुष्ठानं काम्यम्, फलश्रवणात् । अत्र दारुसदन-स्थापितां दुर्गां पूजयेदित्युक्तं निर्णयामृते भविष्ये—

"सप्तम्यां नव गेहानि दारुजानि नवानि च ।
एकं वा वित्तभावेन कारयेत्सुसमाहितः ॥
दुर्गागृहं प्रकर्त्तव्यं चतुरस्रं सुशोभनम् ।
तन्मध्ये वेदिकां कुर्याच्चतुर्हस्तां शुभां समाम् ॥
तस्यां सिंहासनं क्षौमं कम्बलाजिनसंयुतम् ।
तत्र दुर्गां प्रतिष्ठाप्य सर्वलक्षणसंयुताम् ॥
पूजयेत्प्रयतो देवीं नरो नियममास्थितः ।" इति ।

वेदिकायाश्चतुर्हस्तत्वं क्षेत्रफलतो ज्ञेयम् । अस्यां षष्ठ्यामामन्त्रितां विल्वशाखामानीय पूजयेदित्युक्तं ज्योतिःशास्त्रे—

"आश्विनस्य सिते पक्षे सुमुहूर्त्तेन सप्तमी ।
तस्यां च पत्रिकापूजा कर्त्तव्या नवनायकैः ॥
प्रशस्तां सफलां विल्वशाखामाहृत्य पूजयेत् ।" इति ।

आनयनप्रकारस्तु विल्ववृक्षं दुर्गां च सम्पूज्य प्रार्थयेत् । तत्र मन्त्रः—

"विल्ववृक्ष ! महाभाग ! सर्वदा शङ्करप्रिय ! ।
गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् ॥
शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो ! ।" इति ।

ततः फलयुतां वानस्पत्येन मन्त्रेण शाखां छित्वा, गृहमानीय, सम्पूज्य स्थापयेत् । विल्वामन्त्रणप्रकारस्तु आश्विनशुक्लषष्ठ्या-मुक्तः । अत्रैव मूलनक्षत्रे पुस्तकस्थापनं कार्यम्—

"मूलऋक्षे सुराधीश ! पूजनीया सरस्वती ।
पूजयेत्प्रत्यहं देवीं यावद्वैष्णवमृक्षकम् ॥
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।
पुस्तके स्थापिते देव ! विद्याकामो द्विजोत्तमः ॥"

इति रुद्रयामलात् । वैष्णवमृक्षकं श्रवणनक्षत्रम् । संग्रहेऽपि—

"आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम् ।
मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥" इति ।

मार्गशीर्षादिचतुर्मासेषु कृष्णपक्षे सप्तम्यां पूर्वेद्युः श्राद्धं कार्यम् । तदुक्तं कालादर्शे—

"मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने ।
कृष्णपक्षेषु पूर्वेद्युरान्वष्टक्यं तथाऽष्टकाः ॥" इति ।

अष्टकाश्राद्धात्पूर्वेद्युरित्यर्थः । अष्टकास्त्वष्टमीनिर्णये वक्ष्यन्ते । अत्राऽष्टमीश्राद्धानुरोधेन पूर्वेद्युः श्राद्धं कार्यं नापराह्णादि-व्याप्त्या । तत्र निर्णयः । मार्गशीर्षादयश्चामान्ता ग्राह्याः ।

मार्गशीर्षशुक्लसप्तमी मित्रसप्तमी । तत्र मित्रपूजाद्युक्तं निर्णयामृते ब्रह्मपुराणे सप्तमीप्रकरणे—

"यद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः ।
अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः ॥
सप्तम्यां तेन सा ख्याता लोकेऽस्मिन् मित्रसप्तमी ।
षष्ठ्यां च वपनं कार्यं ततः स्नात्वा यजेद्रविम् ॥
तत्रोपवासः कर्त्तव्यो भक्ष्याण्यथ फलानि च ।
सप्तम्यां राध ' कार्यं तस्मै मित्राय भानवे ॥
नानाकुसुमसंभारैर्भक्ष्यैः पिष्टमयैः शुभैः ।
मधुना च प्रभूतेन होमजाप्यसमाधिभिः ॥
ब्राह्मणान् भोजयेत्पश्चाद्दीनानाथांश्च मानवान् ।
रात्रौ जागरणं कार्यं नृत्यगीतपुरःसरम् ॥
अष्टम्यां संविभोज्याथ तथा च नटनर्त्तकाः ।
दिनद्वये च भोक्तव्यं मिष्टमन्नं मधुप्लुतम् ॥" इति ।

अत्र पूर्वदिने कृतवपनः स्नात्वा, रविं सम्पूज्य, फलादिभक्षणेनोपवासं संपाद्य, ततः सप्तम्यां कुसुमैर्नानाभक्ष्यैर्मधुप्लुतपिष्टयुक्तैराराधनं कृत्वा, यथोक्तविधिना यथाशक्ति सूर्यमन्त्रं जपेत् । जपादिविधिस्तु मत्कृताचारादर्शे द्रष्टव्यः । जपदशांशेन होमं कृत्वा, ब्राह्मणादीन् सम्भोज्य, रात्रौ जागरणं कुर्यात् । ततोऽष्टम्यां श्रीसूर्यं सम्पूज्य, गायकादीन् सम्भोज्य, स्वयं दिनद्वयेऽपि मधु-

प्लुतं पिष्टं भुञ्जीत । दिनद्वये सप्तम्यामष्टम्यां च । इति प्रयोगः ।

माघशुक्लसप्तमी रथसप्तमी । सा स्नानादावरुणोदयव्यापिनी ग्राह्या । तदुक्तं विष्णुना—

"सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥" इति ।

अयञ्च स्नानकालो येऽरुणोदये माघे स्नान्ति तान्प्रत्येव, अन्यान् प्रति तु श्रीसूर्योदयः;

माघमासस्य सप्तम्यामुदयत्येव भास्करे ।
विधिवत्तत्र च स्नानं महापातकनाशनम् ॥

इत्यपरार्के विष्णूक्तेः । विधिवद् दीपदानादि कृत्वेत्यर्थः । दीपदानविधिर्हेमाद्रौ भविष्ये—

"सौवर्णे राजते ताम्रे भक्त्याऽलाबूमयेऽथवा ।
तैलेन वर्त्तिर्दातव्या महारजनरञ्जिता ॥
समाहितमना भूत्वा दत्वा शिरसि दीपकम् ।
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् ॥
नमस्ते रुद्ररूपाय रसानां पतये नमः ।
वरुणाय नमस्तेऽस्तु हरिवास ! नमोऽस्तु ते ॥
जले परिहरेद्दीपं ध्यात्वा सन्तर्प्य देवताः ।" इति ।

परिहरेत् स्थापयेत् । महारजनं कुसुम्भम्, "महारजनमुद्दिष्टं शातकुम्भकुसुम्भयोः ।" इति महेश्वरकोषात् ।

स्नानमन्त्रश्च—

"पृथग्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥" इति ।

स्नानोत्तरमर्घस्तूक्तः सौरागमे—

"अर्कपत्रैः सबदरैर्दूर्वाक्षतसचन्दनैः ।
अष्टाङ्गविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥"

अर्घदानमन्त्रो मदनरत्ने—

"सप्तसप्ते ! भव प्रीतः सप्तलोकप्रदीपन ! ।
सप्तमीसहितो देव ! गृहाणार्घ्यं दिवाकर !॥"

अस्यां रथदानमुक्तं भविष्योत्तरे—

"एवंविधं रथवरं रथवाजियुक्तं
हैमं च हैमशतदीधितिना समेतम् ।
दद्याच्च माघसितसप्तमवासरे यः
सोऽसङ्गचक्रगतिरेव महीं भुनक्ति ॥"

निर्णयामृते सप्तमीप्रकरणे—

"रविवारेण युक्तायां सप्तम्यामुत्तरायणे ।
पुन्नामनि च नक्षत्रे पूजयेच्च दिवाकरम् ॥"

उत्तरायणे माघे—इति तत्रैव व्याख्यातम् । पुन्नामनक्षत्राणि ज्योतिःशास्त्रे प्रोक्तानि—

"हस्तो मैत्रस्तथा पुष्यो मृगशीर्षं पुनर्वसुः ।
पुन्नामधेयनक्षत्राण्येतान्याहुर्मनीषिणः ॥" इति ।

अस्यामेव लोलार्कस्नानात्पापमुक्तिरुक्ता काशीखण्डे—

"लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसङ्गमे ।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ॥"

अथ रविवारयुक्ता या काचिच्छुक्लसप्तमी सा विजयासप्तमी-त्युक्तं मदनरत्ने भविष्यपुराणे—

"शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनम् ॥" इति ।

तत्रैव—

"करवीराणि रक्तानि कुङ्कुमञ्च विलेपनम् ।
विजयं धूपमस्यां तु भानोस्तुष्टिकराणि वै ॥"

एषैव भानुसप्तमी कल्याणसप्तमी च । अस्यां योगविशेषमाह स्मृतिचन्द्रोदये गर्गः—

"षष्ठी च सप्तमीयोगे वारश्चेदंशुमालिनः ।
योगोऽयं पद्मको नाम सहस्रार्कग्रहैः समः ॥" इति ।

सप्तमी बुधवारेण सिद्धा । रविवारेण संवर्तयोगाख्या विरुद्धा । योगिन्यस्यां वायव्याम् । इति सप्तमी निर्णीता ।

अथाष्टमी निर्णीयते। सा शुक्ला परा, इतरा पूर्वा। तदुक्तं निगमे—

"शुक्लपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्वविद्धैव कर्त्तव्या परविद्धा न कुत्रचित्॥" इति।

उपवासेष्वेवायं नियमो न तु सर्वत्र,

"उपवासेषु राजेन्द्र! एष धर्मः सनातनः।"

इति तत्रैवोक्तत्वात्। तत्र सर्वाष्टमीषु दुर्गापूजोक्ता काशीखण्डे—

"अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः।
सम्पूज्या सततं काश्यां दुर्गा दुर्गार्त्तिनाशिनी॥" इति।

तथा—

"अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे।
यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते॥" इति।

चैत्रशुक्लाष्टमी भवान्यष्टमी। अत्र भवानीयात्रोक्ता काशीखण्डे—

"चैत्राष्टम्यां महायात्रां भवान्याः कारयेत् सुधीः।
अष्टाधिकाः प्रकर्त्तव्याः शतकृत्वः प्रदक्षिणाः॥
भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः।
न जातु शोकं लभते सदानन्दमयो भवेत्॥" इति।

सा परयुता ग्राह्या। तदुक्तं निगमे—

"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा॥

प्रतिपद्प्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद् व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम् ॥" इति ।

अस्यार्थः—युग्मं द्वितीया, अग्निस्तृतीया, युगं चतुर्थी, भूतं पञ्चमी, षट् षष्ठी, मुनिः सप्तमी, वसुरष्टमी, रन्ध्रं नवमी, रुद्र एकादशी। तिथ्योर्युग्मम्—द्वितीया तृतीयायुक्ता ग्राह्या, तृतीया द्वितीयायुक्ता, चतुर्थी पञ्चमीयुक्ता, पञ्चमी चतुर्थीयुक्ता, षष्ठी सप्तमी-युक्ता, सप्तमी षष्ठीयुक्ता, अष्टमी नवमीयुक्तेत्यादीनि युग्मानि ज्ञेयानि। एतानि चतुर्दशीपूर्णिमायुग्मसाहचर्यात् प्रतिपद्प्यमा-वास्या साहचर्याच्च शुक्लपक्षयुग्मानि ज्ञातव्यानि। तस्माद् वसु-रन्ध्रयोरस्माद्वाक्यांशादियं परैव। यत्तु

"षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥"

इति युग्मवचस्तदेतदर्थकमेव। अपरन्तु

"प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता ।"

इति तत्कृष्णपक्षयुग्मनिर्णायकम्। इयमेवाशोकाष्टमी। अस्या-मशोककलिकाप्राशनं कार्यम्। तदुक्तं लिङ्गपुराणे—

"अशोककलिका अष्टौ ये पिबन्ति पुनर्वसौ ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥" इति ।

प्राशनमन्त्रस्तत्रैव—

"त्वामशोकं शिवाभीष्टं मधुमाससमुद्भवम् ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥" इति ।

अशोककलिकाप्राशने त्वियं नक्षत्रवशात्पूर्वा परा वा ग्राह्या।
नक्षत्रायोगेऽपि केवलाष्टम्यां कार्यम्,

"तिथिः शरीरं तिथिरेव कारणं
तिथिः प्रमाणं तिथिरेव साधनम् ॥"

इति लल्लोक्तेः। एतेन नक्षत्रायोगे कर्मलोप इत्युक्तं सिन्धुकारज्येष्ठैस्तदपास्तम्।

अत्र विशेषस्तिथितत्त्वे कालिकापुराणे—

"चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः।
स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥" इति।

लौहित्यो* ब्रह्मणः पुत्रः। स्नानमन्त्रस्तत्रैव—

"ब्रह्मपुत्र! महाभाग! शन्तनोः कुलसम्भव!।
अमोघगर्भसम्भूत! पापं लौहित्य! मे हर ॥" इति।

पुनर्वसुबुधवाराभ्यां युक्तेयं प्रशस्तेत्युक्तं पृथ्वीचन्द्रोदये विष्णुना—

"पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी।
प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥" इति।

वैशाखशुक्लाष्टम्यामाम्ररसेन स्नानमुक्तं निर्णयामृते देवीपुराणे—

"सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने।
आत्मनो देवतां स्नाप्य मांसीबालकवारिभिः ॥"

---

* ब्रह्मपुत्र इति प्रसिद्धो नदविशेषः। तस्य ब्रह्मपुत्रत्वं तु कालिकापुराणात् (अ० ८४, ८५) अवगन्तव्यम्।

मांसी जटामांसी । वालकमुशीरम् ।

तत्रैव संवत्सरप्रदीपे—

"देव्याः पूजां च कुर्वीत केतक्या चम्पकेन च ।
शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनम् ॥
आत्मनः पारणं तद्वद् दक्षिणां शक्तितो ददेत् ।
सर्वतीर्थाभिषेकन्तु अनेनाप्नोति भार्गव ! ॥" इति ।

अथ ज्येष्ठकृष्णाष्टम्यां त्रिलोचनपूजनमीशलोकप्रदमुक्तं भविष्योत्तरे—

"ज्येष्ठे मासि द्विजश्रेष्ठ ! कृष्णाष्टम्यां त्रिलोचनम् ।
यः पूजयति देवेशमीशलोकं व्रजेन्नरः ॥" इति ।

ज्येष्ठशुक्लाष्टम्यां शुक्लां देवीं पूजयेदित्युक्तं निर्णयामृते ब्रह्मपुराणे—

"शुक्लाष्टम्यां पुरा जाता शुक्ला देवी महानिशि ।
वधाय दानवेन्द्राणां शुक्लपक्षे ततो यजेत् ॥" इति ।

आषाढशुक्लाष्टम्यां महिषघ्नीं देवीं पूजयेदित्युक्तं देवीपुराणे—

"अष्टम्यां च तथाऽऽषाढे निशातोयेन स्नापयेत् ।
स्वयं स्नात्वा च कर्पूरैश्चन्दनैस्तां विलेपयेत् ॥
भक्ष्यान् शर्करया पूर्णान्पानकानि शुभानि च ।
शक्तितो दक्षिणां दद्यान्महिषघ्नीं च कीर्त्तयेत् ॥" इति ।

निशा हरिद्रा । अत्र सामान्यनिर्णयो ज्ञेयः ।

"अहर्निशं योगिगणैकवन्द्यं कृष्णाङ्घ्रियुग्मं विमलं प्रणम्य ।
विभाव्य मालामहसम्प्रदायं कृष्णाष्टमीनिर्णयमातनोमि ॥"

श्रावणकृष्णाष्टमी कृष्णजन्माष्टमीत्युच्यते । तदुक्तं स्कान्दे—

"अष्टमी श्रावणे मासि कृष्णपक्षे यदा भवेत् ।
कृष्णजन्माष्टमी ज्ञेया महापातकनाशिनी ॥" इति ।

इयमर्द्धरात्रव्यापिनी ग्राह्या । तदुक्तं भविष्योत्तरे—

"मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ।
शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञिते ॥
योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत् ।
तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः ॥" इति ।

पुराणसमुच्चयेऽपि—

"श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥" इति ।

श्रावणपदमत्रामान्तमासपरम् । अत्र दिनद्वयसत्त्वेऽसत्त्वे वा "किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा" इति नवमीयोग-प्राशस्त्यात्; "वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी" इति सप्तमी-योगनिषेधाच्च परयुतैव ग्राह्या । इयमेव रोहिणीयुक्ता जयन्ती-त्युच्यते । तदुक्तं वह्निपुराणे—

"कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि ।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ॥" इति ।

स्कान्देऽपि—

"प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् ।
श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ॥
जयं पुण्यं च कुरुते जयन्तीं तां विदुर्बुधाः ॥" इति ।

अयं च रोहिणीयोगो अर्द्धरात्र एव मुख्यः । तदुक्तं वसिष्ठेन—

"अष्टमी रोहिणीयुक्ता निश्यर्द्धे दृश्यते यदि ।
मुख्यकालः स विज्ञेयस्तत्र जातः स्वयं हरिः ॥" इति ।

भविष्येऽपि—

"रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥"

विष्णुधर्मोत्तरे च—

"प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये सति ।" इति ।

तथा तत्रैव—

"समं योगे तु रोहिण्या निशीथे राजसत्तम ! ।
समजायत गोविन्दो बालरूपी चतुर्भुजः ॥
तस्मात्तं पूजयेत्तत्र निशीथे राजसत्तम ! ।" इति ।

यदा कदाचिदीषद्योगस्त्वनुकल्पः । स च वसिष्ठसंहितायां प्रदर्शितः—

"अहोरात्रं तयोर्योगो ह्यसम्पूर्णो भवेद्यदि ।
मुहूर्तमप्यहोरात्रे योगश्चेत् तामुपोषयेत् ॥" इति ।

पुराणान्तरेऽपि—

"रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ! ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥
वासरे वा निशायां वा यत्र स्वल्पापि रोहिणी ।
विशेषेण नभोमासे सैवोपोष्या मनीषिभिः ॥" इति ।

इयमपि चतुर्द्धा भिद्यते । पूर्वेद्युरेव निशीथयोगवती । परेद्युरेव तादृशी । उभयत्रापि तादृशी । उभयनिशीथायोगवती चेति । तत्र या पूर्वेद्युरेव निशीथयोगवती सैवोपोष्या । तदुक्तं वह्निपुराणे—

"सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।
भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ ॥" इति ।

गारुडेऽपि—

"जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।" इति ।

अवशिष्टेषु त्रिष्वपि पक्षेषु परदिन एवोपवासः । दिनद्वये निशीथयोगमुपलक्ष्य उक्तं ब्रह्मवैवर्त्ते—

"वर्जनीया प्रयत्नेन सप्तमीसहिताऽष्टमी ।
सऋक्षापि न कर्त्तव्या सप्तमीसंयुताऽष्टमी ॥" इति ।
"अविद्धायां तु सर्क्षायां जातो देवकिनन्दनः ।" इति ।

अपरेद्यू रोहिणीयुक्ताप्यष्टमी नार्द्धरात्रगा तदा पूर्वेद्यू रोहिणी-रहितापि निशीथगैव ग्राह्या जन्माष्टमी व्रते ।

"समं योगे तु रोहिण्या निशीथे राजसत्तम ! ।
समजायत गोविन्दो बालरूपी चतुर्भुजः ॥
तस्मात्तं पूजयेत्तत्र यथावित्तानुरूपतः ।"

इति वह्निपुराणे निशीथस्यैव विशेष्यत्वेन कर्मकालत्वावगमात् ।

"कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥"

इति वचनात् कर्मकालगाया एव तिथेर्ग्राह्यत्वाभिधानात् ।

जयन्तीव्रते तु परा । परदिने जयन्तीयोगस्य सत्त्वात् । यस्मिन् वत्सरे जयन्तीयोगो नास्ति, तस्मिन्वत्सरे जन्माष्टमी-व्रतमेकमेव प्रवर्त्तते । यदा पूर्वदिने जन्माष्टमीव्रते परदिने जयन्ती योगाज्जयन्तीव्रतं प्राप्नोति तदोपवासद्वयसमर्थेन व्रतद्वयं कार्यम् । पारणा च द्वादश्युपवासपारणावत् । असमर्थेन जन्मा-ष्टमीव्रतमेव कार्यम् । जयन्तीव्रतं तु प्रतिनिधिना भक्ष्यादिना वा सम्पादनीयम् । अत्र माधवस्त्वेतादृशविषये परेऽह्नि जयन्ती-योगस्य सत्वाज्जन्माष्टमीव्रतं न पृथक् कार्यमित्याह—

"यस्मिन्वर्षे जयन्त्याख्ययोगो जन्माष्टमी तदा ।
अन्तर्भूता जयन्त्यां स्याद्दृक्षयोगप्रशस्तितः ॥" इति ।

हेमाद्रिनिर्णयामृतादयः सर्वनिबन्धकारा अपि—

"दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥
उदये चाष्टमीकिञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते यदि वा न वा ॥"

इत्यादिवचनैः परेऽह्नि रोहिणीसहिता निशीथास्पृगपि जन्माष्टमी व्रतेऽपि परैव कार्येत्याहुः । विस्तरस्तु प्रतिज्ञाभङ्गभीत्या न प्रदर्शितः । इदं व्रतं नित्यम् ।

"ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।
ते भवन्ति नराः प्राज्ञ ! व्याला व्याघ्राश्च कानने ॥"

इति स्कान्देऽनिष्टश्रुतेः ।

जयन्तीव्रतं नित्यं काम्यञ्च, प्रत्यवायफलविशेषयोः श्रवणात् । अकरणे प्रत्यवायः स्कान्दे स्मर्यते—

"क्रियाहीनस्य मूर्खस्य परान्नं भुञ्जतोऽपि वा ।
न कृतघ्नस्य लोकोऽस्ति जयन्तीविमुखस्य च ॥" इति ।

फलबोधकं वाक्यं तु विष्णुधर्मोत्तरे जयन्तीं प्रकृत्य श्रूयते—

"यद्बाल्ये यच्च कौमारे यौवने वार्धके तथा ।
बहुजन्मकृतं पापं हन्ति सोपोषिता तिथिः ॥" इति दिक् ।

अथ व्रतग्रहणप्रकारो विष्णुधर्मोत्तरे—

"वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥

अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद् गोविन्द ! त्रियोनिजम् ।
तन्मे मुञ्चति पाशं हिपतितं शोकसागरे ( ? ) ॥
आजन्म मरणं यावद् यन्मया दुष्कृतं कृतम् ।
तत्प्रणाशय गोविन्द ! प्रसीद पुरुषोत्तम ! ॥"

इति प्रातः श्लोकान् पठित्वा सङ्कल्पं कुर्यात् । ततोऽर्द्धरात्रे श्रीकृष्णं व्रतविधिना सम्पूज्य, जागरणं कृत्वा, अपरदिने पुनः सम्पूज्य, ब्राह्मणान् संभोज्य, पारणं कुर्यात् । तत्कालस्तु ब्रह्मवैवर्त्ते—

"अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् ।
हन्यात् पुराकृतं कर्म उपवासार्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात्प्रयत्नतः कुर्यात् तिथिभान्ते च पारणम् ॥" इति ।

अन्यतरान्ते कार्यमित्यपि नारदीये—

"तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् ।
पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः ॥
सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्यादेवं वेदविदो विदुः ॥" इति ।

यदा तिथेर्नक्षत्रस्य वा रात्रावन्तो भवति, तदा रात्रौ पारण-निषेधाद् दिवैवोक्तं ब्रह्मवैवर्ते—

"सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।" इति ।

नारायणीयधर्मप्रवृत्तौ—

"तिथ्यर्क्षे रात्रिपर्यन्तं स्यातां चेत्पारणं दिवा ।
यामत्रयोदूर्ध्वगामिन्यां प्रातरेव हि पारणा ॥
तिथियामत्रयादर्वाक् तिथिभान्ते च पारणम् ।" इति ।

इदं महानिबन्धेष्वसत्त्वान्निर्मूलमिति केचित् ।
कालादर्शे उत्सवान्तोऽप्युक्तः कालः—

"तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्यात्तु पारणम् ।" इति ।

उत्सवान्ते ब्राह्मणभोजनाद्युत्सवान्ते । अयं चोत्सवान्तः पारण-कालस्त्वशक्तान् प्रति ज्ञेयः । प्राचां माधवादीनां मते तु—

"तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमवाप्य वा ।
अर्द्धरात्रेऽथवा कुर्यात् पारणं त्वपरेऽहनि ॥
न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ।
तत्र निश्यपि कुर्वीत वर्जयित्वा महानिशाम् ॥"

इति वचनाभ्यां पारणं रात्रावेव कुर्यादिति । महानिशास्वरूपमाह वृद्धशातातपः—

"महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः ।" इति ।

इदं च जयन्तीव्रतं कामनायां प्रतिमासं कार्यमित्युक्तं मदनरत्नेऽग्निपुराणे—

"प्रतिमासं च ते पूजामष्टम्यां यः करिष्यति ।
मम चैवाखिलान् कामान् स संप्राप्नोत्यसंशयम् ॥" इति ।

तथा—

"अनेन विधिना यस्तु प्रतिमासं नरेश्वर ! ।
करोति वत्सरं पूर्णं यावदागमनं हरेः ॥
दद्याच्छय्यां स सम्पूर्णां गोभिरत्नैरलङ्कृताम् ।" इति ।

अत्र विशेषं ज्ञातुमिच्छता समयमयूखादयो द्रष्टव्याः ।

भाद्रशुक्लाष्टमी दूर्वाष्टमी । तत्र महेशदूर्वापूजा कार्या । तदुक्तं भविष्ये—

"ब्रह्मन् ! भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
महेशं पूजयेद्यस्तु दूर्वया सहितं मुने ! ॥" इति ।

इयं पूर्वा,

"श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥"

इति बृहद्यमेनोक्तत्वात् ।

"शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ॥" इति

भविष्यनिषेधाच्च । यदा तु ज्येष्ठामूलयुक्ता, तदा परा;

"मुहूर्त्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा ।
दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता ॥

ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा ।
भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ॥"

इति पुराणसमुच्चयात् । 'यदि वा परा' इत्युक्तं तत्पूर्वस्यां ज्येष्ठादियोगविषयम् । रौहिणो नवमो मुहूर्त्तः । दिनद्वये ज्येष्ठामूलयोगे पूर्वैव—

"कर्त्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत् ।
दूर्वामभ्यर्चयेद्भक्त्या न बन्ध्यं दिवसं नयेत् ॥"

इति वचनात् । तदा भक्ष्यनियमोऽप्युक्तो भविष्ये—

"अनग्निपक्वमश्नीयादन्नं दधिफलं तथा ।
अक्षारलवणं ब्रह्मन्नश्नीयान्मधुनान्वितम् ॥" इति ।

अत्र विधिः मदनरत्ने—

"शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः ।
स्थाप्य लिङ्गं ततो गन्धैः पुष्पैर्धूपैः समर्चयेत् ॥
दध्यक्षतैर्द्विजश्रेष्ठ ! अर्घ्यं दद्यात् त्रिलोचने ।
दूर्वाशमीभ्यां विधिवत्पूजयेच्छ्रद्धयान्वितः ॥"

तत्र दूर्वाप्रार्थना—

"त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः ।
सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव ॥
यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले ।
तथा ममापि सन्तानं देहि त्वमजरामरम् ॥" इति ।

इदमगस्त्योदयकन्यार्के च सति भाद्रकृष्णाष्टम्यां कार्यं तत्र तन्निषेधात् । तदुक्तं समयमयूखे स्कन्दपुराणे—

"शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाऽष्टमी ।
सिंहार्क एव कर्तव्या न कन्यार्के कदाचन ।।
सिंहस्थे चोत्तमा सूर्येऽनुदिते मुनिसत्तमे ।" इति ।

प्रतापमार्तण्डेऽपि—

"अगस्त्यस्योदये या तु पूजयेदमृतोद्भवाम् ।
वैधव्यं पुत्रशोकं च दश जन्मानि पञ्च च ।।" इति ।

अगस्त्युदयकालश्च दिवोदासीये उक्तः —

"उदेति याम्यां हरिसंक्रमाद्रवेरेकाधिके विंशतिमे ह्यगस्त्यः ।
स सप्तमेऽस्तं वृषसङ्क्रमाच्च प्रयाति गर्गादिभिरभ्यभाणि ।।"

अस्यार्थः—सिंहसङ्क्रान्तेर्विंशतितमेंऽशेऽतीते मुनिरुदेति, वृषसङ्क्रान्ते षष्ठेंऽशेऽतीतेऽस्तं प्रयातीति । यदा भाद्रपदोऽधिकस्तदा तत्रैव कार्यं नोत्कर्षः । तदुक्तं निर्णयदीपे स्कान्दे—

"अधिमासे तु सम्प्राप्ते नभस्य उदये मुनेः ।
अर्वाग् दूर्वाव्रतं कार्यं परतो नैव कुत्रचित् ।।" इति ।

इदं व्रतं स्त्रीणां नित्यम् ।

"या न पूजयते दूर्वां मोहादिह यथाविधि ।
जन्मानि त्रीणि वैधव्यं लभते नात्र संशयः ।।
तस्मात्सम्पूजनीया सा प्रतिवर्षं वधूजनैः ।"

इति चन्द्रप्रकाशे पुराणसमुच्चयेऽनिष्टश्रुतेः । अस्यामेव ज्येष्ठापूजनमुक्तं कालादर्शे—

"भाद्रे शुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता ।
महती कीर्त्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत् ॥" इति ।

इयं नक्षत्रवशेन पूर्वा परा वा ग्राह्या,

"अष्टम्यां वा नवम्यां वा ज्येष्ठा ऋक्षं यदा भवेत् ।
मध्याह्नादधिकं यत्र तत्र ज्येष्ठां प्रपूजयेत् ॥
मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते ।
यस्मिन्कस्मिन् दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥"

इति स्कान्दात् । तत्रापि मध्याह्नोदूर्ध्वं ज्येष्ठायामेव पूजनम्, मध्याह्नादधिकमित्युक्तत्वात्;

"यस्मिन् दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमण्वपि ।
तस्मिन् हविष्यं पूजा च न्यूना चेत्पूर्ववासरे ॥"

इति वचनाच्च । दिनद्वये मध्याह्नोदूर्ध्वं ज्येष्ठायोगेऽयोगे वा पूर्वा,

"मैत्रेण संयुतां ज्येष्ठां यः करोति सदा गृही ।
धनधान्यसमृद्धिः स्यात् पुत्रस्त्रीसौख्यमेव च ॥
मूलेन संयुतां ज्येष्ठां ये कुर्वन्ति नराधिप ! ।
प्राप्तशोका भवेयुस्ते स्त्रीणां वैधव्यमेव च ॥"

इति स्कान्दात् ।

"मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुता ।
रात्रिर्यस्मिन् दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥"

इति वचनाच्च। पूजामन्त्रो भविष्योत्तरे—

"पुत्रदारसमृद्ध्यर्थं लक्ष्म्याश्चैव विवृद्धये।
अलक्ष्म्याश्च विनाशाय ज्येष्ठे! त्वामर्चयाम्यहम्॥"

इति षोडशोपचारैः सम्पूज्य, प्रार्थनां कृत्वा नमस्कारं कुर्यात्।

तत्र मन्त्रः—

"ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमो नमः।
शर्वायै ते नमस्तुभ्यं शाङ्कर्यै ते नमो नमः॥"

त्रिदिनसाध्यमिदं व्रतमित्युक्तं पृथ्वीचन्द्रोदये स्मृतिसंग्रहे—

"मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत्।
मूले विसर्जयेद् देवीं त्रिदिनं व्रतमुत्तमम्॥" इति।

अत्र योगविशेषेणाभिधा स्कान्दे—

"तत्राष्टम्यां यदा वारो भानोर्ज्येष्ठर्क्षमेव च।
नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी॥" इति।

अस्यामेव महालक्ष्मीव्रतारम्भः कार्यः। तदुक्तं मदनरत्ने स्कान्दे—

"मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठायुताऽष्टमी।
प्रारब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः॥" इति।

पुराणसमुच्चयेऽपि—

"श्रियोऽर्चनं भाद्रपदे सिताष्टमीमारभ्य कन्यामगते च सूर्ये।
समापयेत्तत्र तिथौ च यावत् सूर्यस्तु पूर्वार्द्धगतोऽयुवत्याः॥" इति।

सिंहसंक्रान्तौ भाद्रपदसिताष्टमीमारभ्य लक्ष्म्यर्चनमारम्भणीयं तत्कन्यासंक्रान्तिपूर्वार्द्धे समापनीयमित्यर्थः। प्रथमारम्भोद्यापनयोरेवायं नियमः। इयं चाष्टमी निशीथोत्तरवर्तिनी ग्राह्या। तदुक्तं चन्द्रप्रकाशे स्मृत्यन्तरे—

"अर्द्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः।
तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं सदा॥" इति।

अत्र महालक्ष्मीयात्रोक्ता काशीखण्डे—

"महालक्ष्म्यष्टमीं प्राप्य तत्र यात्राकृतां नृणाम्।
सम्पूजितेह विधिवत् पद्मा सद्म न मुञ्चति॥" इति।

आश्विनकृष्णाष्टम्यां महालक्ष्मीव्रतसमाप्तिस्तु चन्द्रोदयव्यापिन्यां कार्या,

"ततो निशीथे सम्प्राप्तेऽभ्युदितेऽमृतदीधितौ।
कृत्वा तु स्थण्डिले पद्मं सषडङ्गं प्रपूजयेत्॥"

इति स्कान्दोक्तेः।

दिवसद्वये चन्द्रोदयकालसत्त्वेऽसत्त्वे वा सप्तमीयोगप्रशस्त्यात् पूर्वैव,

"पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा।
त्रिमुहूर्त्तापि सा पूज्या परतश्चोदूर्ध्वगामिनी॥"

इति मदनरत्ने पुराणसमुच्चयवचनात्। अपरदिने चन्द्रोदयोत्तरं त्रिमुहूर्ता चेत् परैव। इयमष्टकापि। तदुक्तं पाद्मे—

"वसुनामा पिता कन्यां शशापानुग्रहाय च ।
प्रौष्टपद्यष्टकाभूयः पितृलोके भविष्यसि ॥
आयुरारोग्यमैश्वर्यं सर्वकामफलप्रदा ।" इति ।

एतस्याः पद्मसंज्ञोक्ता जातुकर्ण्येन—

"शङ्खं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टका च भवेत्पद्मं तत्र दत्तं तथाक्षयम् ॥" इति ।

आश्विनशुक्लाष्टमी महाष्टमी । तत्र भद्रकालीपूजा कार्या । तदुक्तं ब्रह्मपुराणे—

"तत्राऽष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिर्वृता ॥"

तत्र—आश्विनशुक्ले ।

"अतोऽत्र पूजनीया सा तस्मिन्नहनि मानवैः ॥" इति ।

इयं दुर्गोपवासपूजादौ नवमीयुक्ता ग्राह्या,

"शरन्महाष्टमी पूज्या नवमीसंयुता सदा ।
सप्तमीसंयुता नित्यं शोकसन्तापकारिणी ॥"

इति मदनरत्ने स्मृतिसंग्रहे उक्तत्वात् । अत्र त्रिमुहूर्त्तान्यूनापि सप्तमीवेधहेतुः,

"सप्तमीशल्यसंयुक्ता वर्जनीया सदाऽष्टमी ।
स्तोकापि सा महापुण्या यस्यां सूर्योदयो भवेत् ॥"

इति मदनरत्नोद्धृतपुराणात् । स्तोका स्वल्पा । साऽष्टमी ।

"मूलेनापि हि संयुक्ता सदा त्याज्याऽष्टमी बुधैः ।
लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता ॥"

इति निर्णयामृताच्च ।

यानि च—

"महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ।
सप्तम्या तु युता कार्या मूलेन तु विशेषतः ॥"

एवमादीनि सप्तमीविद्धाविधायकानि तानि वचनानि परदिनेऽष्टम्यभावविषयाणि । यानि च—

"सप्तम्यामुदिते सूर्ये परतश्चाष्टमी भवेत् ।
तत्र दुर्गोत्सवं कुर्यात् न कुर्यादपरेऽहनि ॥
दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूज्यते ।"

इत्यादीनि परदिनेऽष्टमीलाभेऽपि सप्तमीविद्धाविधायकानि तानि सूर्योदयकाले नवम्यभावविषयाणि,

"यदा सूर्योदये न स्यान्नवमी चापरेऽहनि ।
तदाऽष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप ॥"

इति स्मृतिसंग्रहादिति मदनरत्नः । इयं भौमयुक्ता प्रशस्तेत्युक्तं मदनरत्ने स्मृत्यन्तरे—

"अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः ॥" इति ।

अथ कार्तिकशुक्लाष्टमी गोष्ठाष्टमी । तस्यां गोपूजनाद्युक्तं निर्ण-

यामृते कूर्मपुराणे—

"शुक्लाष्टमी कार्त्तिके तु स्मृता गोष्ठाष्टमी बुधैः ।
तत्र कुर्याद् गवां पूजां गोग्रासं गोप्रदक्षिणाम् ॥
गवानुगमनं कार्य्यं सर्वान् कामानभीप्सता ।" इति ।

मार्गकृष्णाष्टमी भैरवाष्टमी । अस्यां भैरवं सम्पूज्य विघ्नं निवारयेदित्युक्तं काशीखण्डे—

"तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः ।
विलोक्य कालराजानं निरयादुद्धरेत् पितॄन् ॥
कृत्वा च विविधां पूजां महासम्भारविस्तरैः ।
नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥" इति ।

उपोषणं जागरणं चोक्तं तत्रैव—

"मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ ।
उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते ॥" इति ।

उपोषणाङ्गत्वेन नार्घ्यदानं कार्यमित्युक्तं शिवरहस्ये—

"उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम् ।" इति ।

अत्रोपवासो जागरणश्चेति विशिष्टं प्रधानं तस्याहोरात्रसाध्यत्वेनेयमष्टम्यहोरात्रव्यापिनी ग्राह्या,

"अहोरात्रव्रतं यच्च एकमेकतिथौ गतम् ।
तस्यामुभययोगिन्यामाचरेत्तद् व्रतं व्रती ॥"

इति स्मृतेः ।

यदा तु दिनेद्वये सायाह्ने तदा पूर्वैव। तदुक्तं समयमयूखे ब्रह्मवैवर्त्ते—

"रुद्रव्रतेषु सर्वेषु कर्तव्या सम्मुखी तिथिः।" इति।

इदमपि रुद्रव्रतम्, कालभैरवस्य रुद्रावतारत्वात्। यत्तु सिन्धुकारज्येष्ठैरुक्तम्— भैरवसन्निधावित्युक्तेर्जागरणोपवासादिकं काश्यामेव कर्तव्यं तत्प्रमाणाभावादुपेक्ष्यम्। पारणं तु प्रातरेव,

"यामत्रयोदूर्ध्वगामिन्यां प्रातरेव हि पारणा।"

इति माधवलिखितस्मृतेः। अत्र पूर्णिमान्तो मासो ग्राह्यः,

"कार्तिके कृष्णपक्षे तु अष्टम्यां भैरवोऽभवत्।"

इति शिवरहस्ये कार्तिकग्रहणात्।

पूर्णिमान्तपौषकृष्णाष्टम्यष्टकेत्युक्तमाश्वलायनेन। हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति। हेमन्तः शिशिर इति ऋतुसंज्ञा। सा चोक्ता श्रुतौ—

"वसन्तो ग्रीष्मो वर्षा शरद्धेमन्तः शिशिर इति षड् वा ऋतवः" इति। तत्र वसन्तर्तुश्चैत्रवैशाखात्मकः, "मधुश्च माधवश्च वासन्ति-कावृतू" इति श्रुतेः। एवं वसन्तादिऋतुक्रमेण मार्गशीर्षपौषात्मको हेमन्तर्तुः। माघफाल्गुनात्मकः शिशिरर्तुः। स द्वेधा सौर-श्चान्द्रश्चेति। तत्र सौरो विष्णुधर्मोत्तरे दर्शितः—

"सौरमासद्वये राम! ऋतुरित्यभिधीयते।" इति

चान्द्रस्तु बह्वृचः श्रुत्या दर्शितः—

"सूर्याचन्द्रमसौ प्रकृत्य विश्वान्यन्यो भुवनाभिचष्ट
ऋतूनन्यो विदधज्जायते पुनः।" इति।

अत्र पुनर्जायत इति लिङ्गादनुकल्पकत्वं चन्द्रस्य प्रतीयते। अनयोर्विनियोगस्त्रिकाण्डमण्डने दर्शितः—

"श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु।
तदलाभे तु सौरर्तुष्विति ज्योतिर्विदां मतम्॥" इति।

तथा च हेमन्तशिशिरयोश्चतुर्ष्वसितपक्षेष्वष्टम्यश्चतस्रोऽप्यष्टकाः। आसु श्राद्धमुक्तं याज्ञवल्क्येन—

"अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः॥" इति दिक्।

पौषशुक्लाष्टमी बुधवारयुक्ता महाभद्रेत्युक्तं निर्णयामृते भविष्योत्तरे—

"पुष्ये मासि यदा देवि! शुक्लाष्टम्यां बुधो भवेत्।
तदा तु सा महापुण्या महाभद्रेति कीर्त्तिता॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम्।"

कार्यमिति शेषः। इयमेव भरणीयुक्ता जयन्तीत्युक्तं तत्रैव—

"पौषे मासि यदा देवि! अष्टम्यां शुक्लपक्षके।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते॥

तदा तु सा महापुण्या जयन्ती अष्टमी शुभा ।
तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् ॥
सर्वं कोटिगुणं देवि ! कृतं भवति कृत्स्नशः ।" इति ।

रौद्रम्—भरणी । तदुक्तं वराहमिहिरेण—

"रौद्राणि पूर्वाभरणी पित्र्याणीति ।"

माघशुक्लाष्टम्यां भीष्मतर्पणं श्राद्धं चोक्तं हेमाद्रौ पाद्मे—

"माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥" इति ।

मन्त्रस्तु भारते—

"भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥
वैयाघ्रपादगोत्राय साङ्कृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥
वसुनामावताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे ॥
ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरं कृतं तेषां पुण्यं नश्यति तत्क्षणात् ॥"

इति पद्मवचनात् तर्पणं नित्यम् ।

श्राद्धं तु "ते स्युः सन्ततिभागिनः" इति पूर्वोक्तवाक्यशेषात् काम्यम् । अत्र तर्पणे सपितृकाणामप्यधिकारः, "जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः ।" इति समयमयूखे पाद्मात् । फाल्गु-

नशुक्लाष्टमी बहुलाष्टमी। तस्यां लक्ष्मीपूजा सीतापूजा च कार्या। तदुक्तं निर्णयामृते ब्रह्मपुराणे—

"फाल्गुने बहुलाष्टम्यां सुस्नातैश्च स्वलङ्कृतैः।
लक्ष्मीः सीता च सम्पूज्या गन्धमाल्यादिभिः सदा॥
ततः प्रदोषसमये दीपा देयाः सहस्रशः।
दत्ताशिष्टं तदा भोज्यं भक्षितव्यश्च बन्धुभिः॥" इति।

इयं प्रदोषव्यापिनी ग्राह्या, तत्रैव दीपदानाद्युक्तत्वात्। दिनद्वये तद्व्याप्तावव्याप्तौ वा परैव,

"शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता॥"

इति नैगमात्। अथ सामान्यतः शुक्लाष्टम्यां बुधवारयोगो भवति तदैकभक्तव्रतं कार्यमित्युक्तं निर्णयामृते भविष्योत्तरे—

"यदा यदा सिताष्टम्यां बुधवारो भवेद् यदि।
तदा तदा हि सा ग्राह्या एकभक्ताशने नृप!॥
बुधाष्टमी तु सम्पूर्णा यथोक्तफलदायिनी।" इति।

अष्टमी भौमेन सिद्धा, गुरुवारेण विरुद्धा। योगिन्यस्यामीशान्याम्। इत्यष्टमी निर्णीता।

अथ नवमी निर्णीयते—

सा तु पूर्वा, 'वसुरन्ध्रयोः' इति युग्मवाक्यात्,

अष्टमी नवमीविद्धा कर्त्तव्या फलकाङ्क्षिभिः।
न कुर्यान्नवमीं तात! दशम्यां तु कदाचन॥

इति ब्रह्मवैवर्त्ताच्च । अथ चैत्रशुक्लनवमी श्रीरामनवमी । अस्यां रामोत्पत्तिरुक्ता हेमाद्रावगस्त्यसंहितायाम्—

"चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ ।
उदये गुरुगौरांश्वोः सोच्चस्थे ग्रहपञ्चके ॥
मेषे पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत्सकलया कौशल्यायां परः पुमान् ॥
तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा ।
रात्रौ जागरणं कुर्याद्रघुनाथपुरो भुवि ॥"

इति । तथा तत्रैव—

"चैत्रे मासे नवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका ।" इति ।

इयं मध्याह्नव्यापिनी ग्राह्या,

"चैत्रशुद्धा तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥"

इति तत्रैवोक्तेः । इयं पूर्वेद्युरेव मध्याह्नव्यापिनी चेत्पूर्वा, कर्मकालव्याप्तेः । दिनद्वये तद्व्याप्तावव्याप्तावेकदेशसमव्याप्तौ वोत्तरैव । तदुक्तं माधवीयेऽगस्त्यसंहितायाम्—

"नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां च दशम्यां पारणा भवेत् ॥" इति ।

यदा तु पूर्वदिने मध्याह्ने सऋक्षोत्तरदिने मध्याह्ने केवला, तदा पूर्वैव, ऋक्षयोगप्राशस्त्यात्। एतेन दिनद्वये मध्याह्नव्याप्तौ नवमी चाष्टमी विद्धा त्याज्येतिवाक्यबलात् पूर्वदिने पुनर्वस्वृक्षयुतामपि त्यक्त्वा परैव कार्येति ब्रुवन्तो माधवानुयायिनो निरस्ताः। ऋक्षाभावेऽपि नवम्युपोष्या। तदुक्तं समयमयूखेऽगस्त्यसंहितायाम्—

"केवलापि सदोपोष्या नवमीशब्दसंग्रहात्।
तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रते॥
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम्।
तस्मिन् दिने तु कर्त्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः॥"

इति ब्रह्मादिफलश्रुतेरिदं काम्यम्। तत्रैव—

"यस्तु रामनवम्यां तु भुङ्क्ते मोहाद्विमूढधीः।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः॥"

इत्यनिष्टश्रुतेर्नित्यमपीदम्। यत्तु सिन्धुकारज्येष्ठैर्नित्यत्वमङ्गीकृत्य, "तस्मात्सर्वात्मना सर्वैः कार्यम्" इत्युपक्रम्य अत्र केवलशैवस्य केवलकृष्णादिभक्तस्यापि नाधिकार इत्युक्तं तदुपक्रमोपसंहारविरोधात्प्रमाणाभावाच्चोपेक्ष्यम्।

अथ व्रतविधिरुक्तो हेमाद्रावगस्त्यसंहितायाम्—

"अष्टम्यां चैत्रमासस्य शुक्लपक्षे जितेन्द्रियः।
द्विजमाहूय सम्पूज्य वृणुयात्प्रार्थयन्निति॥
श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम!।
भक्त्याचार्यो भव प्रीतः श्रीरामोसि त्वमेव च॥

आचार्यं भोजयेत्पश्चात्सात्त्विकान्नैः सुविस्तरम् ।
भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन् ॥
शृण्वन् रामकथां दिव्यामहःशेषं नयन्मुनिः ।
ततः प्रातः समुत्थाय स्नात्वा सन्ध्यां विधाय च ॥
स्वगृहस्योत्तरे देशे दानस्योज्ज्वलमण्डपम् ।
शङ्खचक्रहनूमद्भिः प्राग्द्वारे समलङ्कृतम् ॥
गरुत्मच्छार्ङ्गबाणैश्च दक्षिणे समलङ्कृतम् ।
गदाखड्गाङ्गदैश्चैव पश्चिमे सुविभूषितम् ॥
पद्मस्वस्तिकनीलैश्च कौवेरे समलङ्कृतम् ।
मध्ये हस्तचतुष्केण वेदिकायुक्तमायतम् ॥
ततः सङ्कल्पयेद्देवं राममेव स्मरन्मुने ! ।
अस्यां रामनवम्यां च रामाराधनतत्परः ॥
उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ।
इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः ॥
श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ।
प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे ॥
अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ।
ततः स्वर्णमयीं रामप्रतिमां पलमानतः ॥
निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम् ।
बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने ! ॥
वामेनाधः करेणाराद् देवीमालिङ्ग्य संस्थिताम् ।

सिंहासने राजतेऽत्र पलद्वयविनिर्मिते ॥
अशक्तो यो महाभाग ! स तु वित्तानुसारतः ।
पलेन वा तदर्द्धार्द्धतदर्द्धार्द्धेन वा मुने ! ॥
सौवर्णं राजतं वापि कारयेद्रघुनन्दनम् ।
पार्श्वे भरतशत्रुघ्नौ धृतच्छत्रकरावुभौ ॥
चापद्वयसमायुक्तं लक्ष्मणं चापि कारयेत् ।
दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ॥
मातुरङ्कगतं रामं मूलमन्त्रेण चार्चयेत् ।
पञ्चामृतस्नानपूर्वं पित्तरोचनतोऽर्चयेत् ॥
रामस्य जननी चासि रामरूपमिदं जगत् ।
अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते ॥
नमो दशरथायेति पूजयेत्पितरं ततः ।
अशोककुसुमैर्युक्तमर्घ्यं दद्याद् विचक्षणः ॥
दशाननवधार्थाय धर्मसंस्थापनाय च ।
राक्षसानां विनाशाय दैत्यानां निधनाय च ॥
परित्राणाय साधूनां जातो रामः स्वयं हरिः ।
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ! ॥
पुष्पाञ्जलिं पुनर्दत्त्वा यामे यामे प्रपूजयेत् ।
दिवैवं विधिवत्कृत्वा रात्रौ जागरणं ततः ॥
ततः प्रातः समुत्थाय स्नानं सन्ध्यादिकाः क्रियाः ।
समाप्य विधिवद्रामं पूजयेद् विधिवन्मुने ! ॥

ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ।
पूर्वोक्तपद्मकुण्डे वा स्थण्डिले वा समाहितः ॥
लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः ।
साज्येन पायसेनैव स्मरन् राममनन्यधीः ॥
ततो भक्त्या च सन्तोष्य आचार्यं पूजयेन्मुने ! ।
ततो रामं स्मरन् दद्यादेवं मन्त्रमुदीरयेत् ॥
इमां स्वर्णमयीं रामप्रतिमां समलङ्कृताम् ।
चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ॥
श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ।
इति दत्त्वा विधानेन दद्याद्वै दक्षिणां भुवम् ॥
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ।
तुलापुरुषदानादिफलं प्राप्नोति सुव्रत ! ॥" इति ।

इदं च श्रीरामनवमीव्रतं—

"स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।"

इति वचनान्मलमासे न कार्यम्;

"सुजन्ममप्यजन्मं स्यान्नोपवासः कुतो भवेत् ।
न कुर्यान्मलमासे तु महादानं व्रतानि च ॥"

इति माधवीये संग्रहवचनाच्च । अस्यां भद्रकालीपूजनमुक्तं कल्पतरौ ब्राह्मे—

"चैत्रे नवम्यां शुक्लायां भद्रकाली महाबला ।
योगिनीनां तु सर्वासामाधिपत्येऽभिषेचिता ॥

तस्मात्तां पूजयेत्तत्र सोपवासो जितेन्द्रियः ।
विचित्रैर्बलिभिर्भक्त्या सर्वासु नवमीषु च ॥" इति ।

वैशाखकृष्णशुक्लनवम्योश्चण्डिकां पूजयेत् । तदुक्तं निर्णयामृते भविष्योत्तरे—

"वैशाखे मासि राजेन्द्र ! नवम्यां पक्षयोर्द्वयोः ।
उपवासपरो भक्त्या पूजमानस्तु चण्डिकाम् ॥
विमानवरमारूढो देवलोके महीयते ।" इति ।

ज्येष्ठशुक्लनवम्यामुमापूजनमुक्तं भविष्ये—

"ज्येष्ठे मासि नृपश्रेष्ठ ! कृत्वा नक्तस्य वै विधिम् ।
उपवासपरो भक्त्या नवम्यां पूजयेदुमाम् ॥
कुमारीर्भोजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथा ।
शाल्यन्नं पयसोपेतं स्वयं भुञ्जीत वाग्यतः ॥" इति ।

आषाढकृष्णशुक्लनवम्योरैन्द्रीं पूजयेदित्युक्तं तत्रैव—

"उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः ।
आषाढे मासि राजेन्द्र ! यः कुर्यान्नक्तभोजनम् ॥
पूजयेच्छ्रद्धया दुर्गामैन्द्रीनाम्नीं तु नामतः ।
ऐरावतगतां शुभ्रां स्वेन रूपेण रूपिणीम् ॥
स ऐरावतमारुह्य इन्द्रस्यानुचरो भवेत् । इति ।

श्रावणकृष्णशुक्लनवम्योः कौमारीपूजा कार्या । तदुक्तं निर्णयामृते भविष्योत्तरे—

श्रावणे मासि राजेन्द्र ! यः कुर्यान्नक्तभोजनम् ।

क्षीरषष्टिकभक्तेन सर्वभूतहिते रतः ॥
कौमारीमिति वै नाम्ना चण्डिकां पूजयेत्सदा ।
कृत्वा रौप्यमयीं भक्त्या घोरां वै पापनाशिनीम् ॥
करवीरस्य पुष्पैस्तु गन्धैश्चागुरुचन्दनैः ।
धूपेन च दशाङ्गेन मोदकैश्चापि पूजयेत् ॥
कुमारीर्भोजयेच्छक्त्या स्त्रियो विप्रान् स्वशक्तितः ।
भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः ॥
एवं सम्पूजयेदार्यान् श्रद्धया परयान्वितः ।
स याति परमं स्थानं यत्र देवो गुहः स्थितः ॥" इति ।

भाद्रपदशुक्लनवमी नन्दा । तस्यां दुर्गापूजनमुक्तं भविष्योत्तरे—

"मासि भाद्रपदे या स्यान्नवमी बहुलेतरा ।
सा तु नन्दा महापुण्या कीर्त्तिता पापनाशिनी ॥
तस्यां यः पूजयेद् दुर्गां विधिवत्कुरुनन्दन ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥" इति ।

अथाश्विनकृष्णनवम्यामन्वष्टकाश्राद्धम् । तच्चाष्टकाद्युक्त्वाऽऽहाश्वलायनः—

"अपरेद्युरन्वष्टक्यम् ।" इति ।

अथाश्विनशुक्लनवमी महानवमी । सा पूर्वविद्धा । तदुक्तं बृहद्यमेन—

"श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥" इति ।

बलिदानादि नवम्यामेव कार्यम्,

"नवम्यां च जपं होमं समाप्य विधिवद् बलिम् ॥"

इति राजमार्तण्डे उक्तत्वात् । न च समाप्यैतद्बलाद् अष्टम्यामारम्भो नवम्यां समाप्तिरिति वाच्यम्,

"बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप ! ।"

इति देवीपुराणेऽनिष्टश्रुतेः ।

"नवम्यां बलिदानं तु कर्त्तव्यं वै यथाविधि ।
जपं होमं च विधिवत्कुर्यात्तत्र विभूतये ॥"

इति कालिकापुराणे नवम्यामेवोक्तत्वान्नवम्यामुपक्रम्य नवम्यामेव समापयेत् । ब्राह्मणानां बलिद्रव्याणि रुद्रयामले—

"ब्राह्मणेन सदा देयं कूष्माण्डं बलिकर्मणि ।
श्रीफलं वा सुराधीश ! छेदं नैव तु कारयेत् ॥
माषान्नेन बलिर्देयो ब्राह्मणेन विजानता ।" इति ।

बलिदानमन्त्रः—

"बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा ।
मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥
असुरा यातुधान्यश्च ये च विघ्नविनायकाः ।
जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ॥
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥" इति ।

होमद्रव्याण्युक्तानि रुद्रयामले—

"प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा ।
किंशुकैः सर्षपैः पूपैः लाजदूर्वांकुरैरपि ॥
यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा ।
रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः ॥
प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात् ।" इति ।

अत्र यद्यपि तृतीयया प्रतीतां किंशुकादीनां परस्परं निरपेक्षसाधनतां बाधित्वा 'सर्वद्रव्याणि च क्रमात्' इति वाक्यशेषस्तेषां प्रत्येकं पृथक्साधनतां विदधाति, तथापि—

"पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् ।
होमयेद्विधिवद् भक्त्या दशांशेन नृपोत्तम ! ॥"

इति डामरतन्त्रादिवचनैर्मिश्रितानामेव पायसादीनां साधनता बोध्या । श्लोकाः* सप्तशत्याः । दशमीकृत्यं रुद्रयामले—

"दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् ।" इति ।

विसर्जनमन्त्रस्तत्रैव—

"इमां पूजां मया देवि ! यथाशक्तिनिवेदिताम् ।
रक्षणार्थं समादाय व्रज स्थानमनुत्तमम् ॥" इति ।

पारणा दशम्यां कार्या,

"आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकम् ।
प्रतिपत्संक्रमेणैव यावच्च नवमी भवेत् ॥"

---

* प्रतिश्लोकं च जुहुयादित्यत्र पठितस्य श्लोकशब्दस्य निरुक्तिः ।

इत्यभिव्याप्त्यर्थकयावत्पदघटितदेवीपुराणवचनेन नवम्यन्तं नव-रात्रविधानात्। तथाहि, पूजात्मके प्रधाने देवीपुराणे कालविधिः श्रूयते—

"आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव।
देविकापूजने प्रोक्ताः सर्वकामफलप्रदाः॥"

अत्र तिथिनवकविधानात् पूजायां तावत्संख्यापूरकनवमीविधिः सिद्धः। ततश्च फलिसंस्कारकतया तदङ्गभूतेषूपवासेषु वैकल्पिक-तया तत्स्थानापन्नेषु नक्तादिष्वपि तावन्नवसंख्याव्रीहिधर्म इव यवेषु प्राप्नोति। यानि तु,

"तस्मात्तु पारयेद्देव ! नवम्यां भक्तितत्परः।
नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति॥
दशम्यां पारिता देवी कुलनाशं करोति हि।"

इत्यादीनि नवमीपारणाविधायकानि दशमीपारणानिषेधकानि वाक्यानि तानि सम्पूर्णनवम्युत्तरमवशिष्टनवम्यां पारणापराणि द्रष्टव्यानि। एवं च "सर्वेषामुपवासानां प्रातरेव हि पारणा" इति वचोऽप्यनुसृतं भवति। यदा तु,

"नवम्यां पारणं कुर्याद्दशमीसहिता न चेत्।
दशमीसहिता यत्र पारणे नवमी भवेत्॥"
"सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति।"

इत्यादीन्यपि वचनानि सप्रमाणकानि। तदा नवमीपारणाविष-यकाणि वाक्यानि कुलधर्मानवेक्ष्य योज्यानि, इति दिक्। सूत-

केऽपीदं पारणं कार्यमेव, "सूतके पारणं कुर्यात्" इति पूर्वमुक्तत्वात् । माधवीये कौर्मेऽपि—

"काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यं व्रतं कुर्याद्दानार्चनविवर्जितम् ॥" इति ।
"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥"

इति विष्णुवचनाच्च । आरम्भस्तु तेनैवोक्तः—

"आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥" इति ।

स्त्रीभिरपि रजोदोषे कार्यम्,

"प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥"

इति सत्यव्रतवचनात् । इदं सधवापरमिति केचित् । विधवायास्तु रजोदर्शने भोजननिषेधात् । श्रीमातामहचरणास्तु विधवाया रजोदर्शने भोजननिषेधाभावात्तस्या अपि पारणा भवत्येव । अस्तु निषेधः, स रागप्राप्तभोजननिषेधो न तु वैधः, विधिस्पृष्टे निषेधानवकाशात्; अन्यथा व्रतहानिः स्यात्, "पारणान्तं व्रतं ज्ञेयम्", इत्युक्तेरिति युक्तमुत्पश्यन्ति । इयं मन्वादिरपि, "अश्वयुक् शुक्लनवमी" इति वक्ष्यमाणवाक्यात् । कार्त्तिकशुक्लनवम्यां त्रिरात्रव्रतारम्भं कृत्वा तुलसीविवाहः कार्य इत्युक्तं हेमाद्रौ पाद्मे—

"कार्त्तिके शुक्लनवमीमवाप्य विजितेन्द्रियः ।
हरिं विधाय सौवर्णं तुलस्या सहितं शुभम् ॥
पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम् ।
एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ॥" इति ।

अथ वैवाहिकविधिरुक्तः श्रीविष्णुयामले—

वसिष्ठ उवाच—

"विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि ।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आदावेव वने वाथ तुलसीं स्वगृहेऽपि वा ।
मासत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डं वेदीं तथा पुनः ॥
शान्तिकं च प्रकर्त्तव्यं मातॄणां स्थापनं तथा ।
मातृश्राद्धादिकं सर्वं विवाहवत् समाचरेत् ॥
ब्राह्मणांश्च शुचीन् स्नातान् वेदवेदाङ्गपारगान् ।
ब्रह्माणं दैशिकं चैव चतुरश्च तथर्त्विजः ॥"

चतुरो ब्राह्मणानिति सम्बन्धः ।

"वैष्णवेन विधानेन वर्द्धनीकलशे यजेत् ।
मण्डलं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥

ग्रहय ं पुरा कृत्वा मातॄणां यज ं तथा ।

कृत्वा नान्दीमुखश्राद्धं सौवर्णं स्थापयेद्धरिम् ॥

कृत्वा रूप्येण तुलसीं लग्ने त्वस्तमिते रवौ ।

वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥

यदा वध्नेन मन्त्रेण कङ्कणं पाणिपल्लवे ।

कोदादिति मन्त्रेण करग्राहो विधीयते ॥

ततः कुण्डे समागत्य आचार्यैः सह सद्विजैः ।

आचार्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥

विवाहकर्मवत्सर्वं वैष्णवं देशिकोत्तमैः ।"

अत्र नवाहुतीरित्युक्तेर्बह्वृचगृह्योक्ता नवाहुतयो बोध्याः । "कर्त्तव्यश्च ततो होमो विशेषाद् विधिपूर्वकम् ।" ॐ नमो भगवते केशवाय स्वाहा, नारायणाय स्वाहा, माधवाय स्वाहा, गोविन्दाय०, विष्णवे०, मधुसूदनाय०, त्रिविक्रमाय०, वामनाय०, श्रीधराय०, हृषीकेशाय०, पद्मनाभाय०, दामोदराय०, सङ्कर्षणाय०, उपेन्द्राय०, वासुदेवाय०, अनिरुद्धाय०, अच्युताय०, अनन्ताय०, गदिने०, चक्रिणे०, विष्वक्सेनाय०, वैकुण्ठाय०, जनार्दनाय०, मुकुन्दाय०, अधोक्षजाय स्वाहेति । अत्र पञ्चविंशतिनाममन्त्रहोमेऽनादिष्ट-द्रव्यकत्वादाज्यहोमः ।

"प्रदक्षिणाश्च कर्तव्याश्चतस्रो विष्णुना सह ।

तुलस्याः पाणिग्रहणे वेदिकाया विभावसोः ॥

शतकुम्भं जपेत्सूक्तं पावमानी विशेषतः ।
तथैव शान्तिकाध्यायान्नवसूक्तं तथैव च ॥
जीवसूक्तं पुनर्जप्त्वा तथा वैष्णवसंहिताम् ।
शङ्खझल्लरिनिर्घोषैर्भेरीतूर्यस्य निस्वनैः ॥
गायन्ते मङ्गलं नार्यो माङ्गल्यविधिमाचरेत् ।
दद्यात्पूर्णाहुतिं पश्चादभिषेकविधिं ततः ॥
ब्रह्मणे वृषभं दद्यादाचार्य्यं परिधाप्य च ।
गां पदं च तथा शय्यामाचार्याय प्रदापयेत् ॥
ऋत्विग्भ्यो दापयेद् वस्त्राण्येषां दद्याच्च दक्षिणाम् ।
एवं प्रतिष्ठितां देवीं विष्णुना तु समर्च्चयेत् ॥
आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति ।
वापयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ॥
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ।
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाऽक्षयम् ॥
प्राप्नोति विपुलान् भोगान् विष्णुना सह मोदते ।
प्रतिष्ठा श्रीतुलस्यास्तु इत्युक्ता विष्णुयामले ॥”

वर्द्धनीकलशलक्षणं सिद्धान्तशेखरे—

“सप्तांगुलसमोत्सेधा विस्तृता स्यान्नवांगुला ।
अंगुलं वक्त्रविस्तारः कण्ठोत्सेधश्चतुर्यवम् ॥
ओष्ठन्तु द्व्यङ्गुलं कुर्यात् निर्गमं चैकमङ्गुलम् ।
नालं सार्द्धांगुलं कुर्यादुत्पलाकृतिवच्छुभम् ॥”

इति इयं युगादिः । तदुक्तं विष्णुपुराणे—

"वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥"

पञ्चदश्यमा । रत्नमालायामपि—

"माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ।
तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ॥" इति ।

अस्यां गोदानादिकमुक्तं विष्णुपुराणे—

"अस्मिंश्च गोभूमिहिरण्यवस्त्रदानेन सर्वं प्रविहाय पापम् ।
शूरत्वमिन्द्रस्य सुहृत्त्वमेति मर्त्याधिपत्यं लभते मनुष्यः ॥" इति ।

अत्र श्राद्धमप्युक्तं ब्रह्माण्डे—

"आषाढ्यामथ कार्तिक्यां माघ्यां मन्वन्तरादिषु ।
युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते ॥
प्रौष्ठपद्यसिते पक्षे श्राद्धं कुर्वीत यत्नतः ।"

इत्यनेनास्य नित्यत्वमुक्तम् ।

"न यस्य यात्रा मन्त्रश्च शतवारं तदा जपेत् ।
युगादयो यदा शून्याः कुरुते सैव चाप्रियः ॥" इति ।

ऋग्विधाने प्रायश्चित्तश्रवणाच्च । अत्र चतसृष्वपि युगादिषु श्राद्धमपराह्णे कार्यम् । दानं तु शुक्ले पूर्वाह्णे, कृष्णेऽपराह्णे ।

"द्वे शुक्ले द्वे तथा कृष्णे युगादि कवयो विदुः ।"

इति पूर्वोक्तनारदीयवचनात् । अत्र रात्रिभोजने प्रायश्चित्तमृग्विधाने—

"रात्रौ भुङ्क्ते वत्सरे तु मन्वादिषु युगादिषु ।
अभिस्वव्रष्टिं मन्त्रञ्च जपेदशनपातके ॥" इति ।

अत्र समुद्रस्नानमप्युक्तं पृथ्वीचन्द्रोदये सौरपुराणे—

"युगादौ तु नरः स्नात्वा विधिवल्लवणोदधौ ।
गोसहस्रप्रदानस्य कुरुक्षेत्रे फलं हि यत् ॥
तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवम् ।" इति ।

अयमेव विधिः सर्वयुगादिषु ज्ञेयः । अथात्र प्रसङ्गाद् युगान्ताः प्रदर्श्यन्ते । हेमाद्रौ ब्रह्मपुराणे—

"सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेता युगस्य तु ॥
यस्तु वृषसंक्रान्त्यां द्वापरान्तस्तु संज्ञया ।
तथा कुम्भस्य संक्रान्त्यामन्तः कलियुगस्य तु ॥
युगादिषु युगान्तेषु श्राद्धमक्षय्यमुच्यते ।" इति ।

मार्गशुक्लनवमी नन्दिनी । तस्यां त्रिरात्रोपोषित इष्टदेवतां पूजयेत् । तदुक्तं निर्णयामृते भविष्योत्तरे—

"मासि मार्गशिरे वीर ! शुक्लपक्षे तु या भवेत् ।
सा नन्दिनी महापुण्या नवमी परिकीर्तिता ॥
यस्तस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः ।
सोऽश्वमेधमवाप्येह विष्णुलोके महीयत ॥" इति ।

माघशुक्लनवमी महानन्दा प्रोक्ता तत्रैव—

"माघमासे तु या शुक्ला नवमी लोकपूजिता ।
महानन्दा तु सा प्रोक्ता सदानन्दकरी नृणाम् ॥
तस्यां स्नानं तथा दा ँजपहोमाभिषेचनम् ।
सर्वँ तदक्षयं प्रोक्तं तदस्यां क्रियते नरैः ॥" इति ।

नवमी मन्देन सोमेन सिद्धा । बुधेन विरुद्धा । योगिन्यत्र पूर्वस्यामिति नवमी निर्णीता ।

अथ दशमी निर्णीयते । सा तु शुक्लोत्तरा, कृष्णा पूर्वा ।
एतदेवाभिप्रेत्याहाङ्गिराः—

"सम्पूर्णा दशमी कार्या परया पूर्वयाऽथवा ।
युक्ता न दूषिता यस्मात्तिथिः सा सर्वतोमुखी ॥" इति ।

हेमाद्रिस्त्वयमैच्छिको विकल्प इत्याह—
तत्र शास्त्रतो व्यवस्थासम्भवात् । तथा च मार्कण्डेयः—

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।" इति ।

उपवासे तु पक्षद्वयेऽपि सर्वनिबन्धकारसम्मता पूर्वैव कार्य्या,

"दशमी चैव कर्त्तव्या सदुर्गा सा द्विजोत्तम ! ।"

इति स्कान्दात् ।

"नागविद्धा तु या षष्ठी शिवविद्धा च सप्तमी ।
दशम्येकादशीविद्धा नोपोष्या सा कथंचन ॥"

इति शिवरहस्ये एकादशीविद्धनिषेधाच्च ।

अथ चैत्रशुक्लदशम्यां यमपूजनं कार्यमित्युक्तं निर्णयामृते देवीपुराणे—

"धर्मराजं दशम्यां च पूजयित्वा सुगन्धकैः ।
विगतारिर्निरातङ्क इह चान्ते परं पदम् ॥" इति ।

प्राप्नोतीति शेषः । ज्येष्ठशुक्लदशमी दशहरा । तदुक्तं हेमाद्रौ ब्राह्मे—

"ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥" इति ।

दशपापान्याह मनुः—

"अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतञ्चैव पैशुन्यं चापि सर्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परवित्तेष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥"

अस्यां दश योगा उक्ताः स्कान्दे—

"ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।" इति ।

गरः करणम् । आनन्दो योगविशेषः ।

वाराहपुराणे तु पञ्चयोगा उक्ताः—

"दशम्यां शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि ।
अवतीर्णा ह्यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा ॥

हरते दश पापानि तस्माद्दशहरा स्मृता ।" इति ।

योगविशेषेण पूर्वा परा वा ग्राह्या । यत्त्वत्र उक्तयोगेभ्यो न्यून-योगे न स्नानमित्युक्तं सिन्धुकारज्येष्ठैस्तत्प्रमाणाभावादुपेक्ष्यम् । वस्तुतस्तु ज्येष्ठशुक्लदशम्याः प्राधान्याद्धस्तादियोगाभावेऽपि केवल-दशम्यां यथोक्तस्नानं कार्यमेव । अस्यां कृत्यमुक्तं भविष्ये—

"तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥
सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ।" इति ।

स्कान्देऽपि—

यां काञ्चित्सरितं प्राप्य दद्यादर्घ्यं तिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥" इति ।

अत्र विशेषः काशीखण्डे—

"ज्येष्ठमासि सिते पक्षे दशम्यां हस्तसंयुते ।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः ॥
निशायां जागरं कुर्याद् गङ्गां दशविधैर्हरे ! ।
पुष्पैः सुगन्धैर्नैवेद्यैः फलैर्दशदशोन्मितैः ॥
प्रदीपैर्दशभिर्धूपैर्दशाङ्गैर्गरुडध्वज ! ।
पूजयेच्छ्रद्धया धीमान् दशकृत्वो विधानतः ॥
साज्यान् तिलान् क्षिपेत्तोये गङ्गायाः प्रसृतीर्दश ।
गुडसक्तुमयान् पिण्डान् दद्याच्च दशमन्त्रतः ॥

नमः शिवायै प्रथमं नारायण्यै पदं ततः ।
दशहरायै पदमिति गङ्गायै मन्त्र एव वै ॥
स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः ।
पूजा दानं जपो होमोऽनेनैव* मनुना स्मृतः ॥
हेम्ना रूप्येण वा शक्त्या गङ्गामूर्तिं विधाय च ।
वस्त्राच्छादितवक्त्रस्य पूर्णकुम्भस्य चोपरि ॥
प्रतिष्ठाप्यार्चयेद्देवीं पञ्चामृतविशोधिताम् ।
चतुर्भुजां त्रिनेत्रां च नदीनदनिषेविताम् ॥
लावण्यामृतनिष्पन्दसंशीलद्गात्रयष्टिकाम् ।
पूर्णकुम्भसिताम्भोजवरदाभयसत्कराम् ॥
ततो ध्यायेत्सुसौम्याञ्च चन्द्रायुतसमप्रभाम् ।
चामरैर्वीज्यमानाञ्च श्वेतच्छत्रोपशोभिताम् ॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यपूजितपदां देवर्षिभिरभिष्टुताम् ॥
ध्यात्वा समर्च्य मन्त्रेण धूपदीपोपहारतः ।
माञ्च तां च विधिं ब्रह्मं हिमवन्तं भगीरथम् ॥
प्रतिमाग्रे समभ्यर्च्य चन्दनाक्षतनिर्मितान् ।
दशप्रस्थतिलान् दद्याद्दशविप्रेभ्य आदरात् ॥
पलं च कुडवप्रस्थ आढको द्रोण एव च ।

---

* मन्त्रेण

धान्यमानेषु बोद्धव्या क्रमशोऽमी चतुर्गुणाः ॥
मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ।
हंसकारण्डवबकचक्रसारसटिट्टिभान् ॥
यथाशक्ति स्वर्णरूप्यताम्रपिष्टविनिर्मितान् ।
अभ्यर्च्य गन्धकुसुमैर्गङ्गायां प्रक्षिपेद् व्रती ॥
एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥
एतैर्दशविधैः पापैर्दशजन्मसमुद्भवैः ।
मुच्यते नात्र सन्देहः सत्यं सत्यं गदाधर ! ॥
उद्धरेन्नरकाद् घोराद्दश पूर्वान् दशावरान् ।
वक्ष्यमाणमिदं स्तोत्रं गङ्गाग्रे श्रद्धया जपेत् ॥" इति ।

इदं दशहराकृत्यं मलमासेऽपि कार्य्यमित्याह हेमाद्रावृष्यशृङ्गः—

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु" इति ।

दशहरास्विति बहुवचनं प्रतिपदादितिथ्यभिप्रायेण ।

अथात्र प्रसङ्गाद्दशहरास्तोत्रं लिख्यते । तच्च काशीखण्डे यावदुपलभ्यमानं तावदेव लिख्यते । तत्रादौ सङ्कल्पपूर्वकं गङ्गां सम्पूज्य पठेत् ।

"ओं नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्त्तये ॥
सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते ।
स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो नमः ॥
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ।
तापत्रितयसंहन्त्र्यै प्राणेश्वर्यै नमो नमः ॥
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्तये ।
सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये ॥
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ।
भोगोपभोगदायिन्यै भोगवत्यै नमो नमः ॥
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ।
नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ॥
नमस्ते शुक्लसंस्थायै क्षमावत्यै नमो नमः ।
त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः ॥
नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः ।
नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥

बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः ॥
नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ।
पृथ्व्यै शिवामृताय च सुवृषायै नमो नमः ॥
पराशरशताद्यायै तारायै ते नमो नमः ।
पाशजालनिकृन्तिन्यै अभिन्नायै नमो नमः ॥
शान्तायै च वरिष्ठायै वरदायै नमो नमः ।
उस्रायै सुखजग्ध्यै च संजीविन्यै नमो नमः ॥
ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ।
प्रणतार्त्तिप्रभञ्जिन्यै जगन्मात्रे नमो नमः ॥
सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ।
शरणागतदीनार्त्तपरित्राणपरायणे ! ॥
सर्वस्यार्ति हरे ! देवि ! नारायणि ! नमोऽस्तु ते ।
निर्लेपायै दुःखहन्त्र्यै दक्षायै ते नमो नमः ॥
परापरपरे ! तुभ्यं नमस्ते मोक्षदे ! सदा ।
गङ्गे ! ममाग्रतो भूया गङ्गे ! मे देवि ! पृष्ठतः ॥
गङ्गे ! मे पार्श्वयोरेधि त्वयि गङ्गेऽस्तु मे स्थितिः ।
आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते ! शुभे !
त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥
गङ्गे ! त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ! ।
य इदं पठते स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥
शृणोति श्रद्धया युक्तः कायवाक्चित्तसम्भवैः ।

दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥
रोगस्थो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते ।
द्विषद्भ्यो बन्धनाद्यैश्च भयेभ्यश्च प्रमुच्यते ॥
सर्वान् कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ।
इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् ॥
नाग्निचौरभयं तत्र पापेभ्योऽपि भयं नहि ।
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
संहरेत्त्रिविधं पापं बुधवारेण संयुता ॥
तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥
सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ।
पूर्वोक्तेन विधानेन यत्फलं सम्प्रकीर्तितम् ॥
यथा गौरी तथा गङ्गा तस्माद् गौर्यास्तु पूजने ।
विधिर्यो विहितः सम्यक् सोऽपि गङ्गाप्रपूजने ॥
यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा ।
उमा यथा तथा गङ्गा चतूरूपं न भिद्यते ॥
विष्णुरुद्रान्तरं यच्च श्रीगौर्य्योरन्तरं तथा ।
गङ्गागौर्य्यन्तरं चैव यो ब्रूते मूढधीस्तु सः ॥"

इति काशीखण्डे दशहरास्तोत्रं सम्पूर्णम् ॥ आषाढशुक्लदशमी मन्वादिः । मन्वादयस्तूक्ता मात्स्ये—

"अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ॥
कार्त्तिकी फाल्गुनी चैत्री ज्येष्ठी पञ्चदशी सिता ।
मन्वन्तरादयश्चैता दत्तस्याऽक्षयकारकाः ॥" इति ।

अत्र तथाशब्दाच्छुक्लपदं द्वादशीतृतीययोरन्वेति, अपिशब्दात् सितेति पदस्य दशम्यामप्यन्वयः । मण्डूकप्लुतिन्यायेन माघसप्तम्यामपि तस्यान्वयः कार्यः । एता मन्वादयः शुक्लपक्षे पौर्वाह्णिक्यः, कृष्णपक्षे आपराह्णिक्यो ग्राह्याः,

"पूर्वाह्णे तु सदा ग्राह्याः शुक्ला मनुयुगादयः ।
दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ॥" इति गारुडात् ।

स्कान्दे—

"मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्य्ययोः ।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥" इति ।

क्रिया स्नानदानादि कर्म । अत्रापि श्राद्धमुक्तं तत्रैव—

"कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।
हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ॥" इति ।

तच्च श्राद्धं मलमासे सति मासद्वयेऽपि कार्यम् । तदुक्तं स्मृतिचन्द्रिकायाम्—

"मन्वादिकं तैर्थिकञ्च कुर्यान्मासद्वयेऽपि च ।" इति ।

इदं श्राद्धं पिण्डरहितं कार्यमित्युक्तं कालादर्शे—

"विषुवायनसङ्क्रान्तिमन्वादिषु युगादिषु ।
विहाय पिण्डनिर्वापं सर्वं श्राद्धं समाचरेत् ।।" इति ।

विषुवसंक्रान्तिश्राद्धमयनसंक्रान्तिश्राद्धञ्च । विषुवसंक्रान्ती द्वे । अयनसंक्रान्ती च द्वे । अत्र प्रसङ्गाल्लब्धावसरेण सङ्क्रान्तयो निर्णीयन्ते । नागरखण्डे—

"रवेः संक्रमणं राशौ संक्रान्तिरिति कथ्यते ।
स्नानदानजपश्राद्धहोमादिषु महाफलम् ।।" इति ।

संक्रान्तिसंज्ञा उक्ता वसिष्ठेन—

"अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ।।
झषकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषौ तयोर्मध्ये ततोऽपराः ।।"

तयोर्मध्येऽयनविषुवतोर्मध्ये । तथा—

"कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखी प्रोक्ता षडशीतिगुणा फले ।।
वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ।
एतद्विषुपदं नाम विषुवादधिकं फलम्"।। इति ।

ऋक्षभेदेनासां नामान्तराण्युक्तानि ज्योतिःशास्त्रे—

"मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैश्च राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षैश्च संक्रमे" ॥

इति । ध्रुवाणि रोहिण्युत्तरात्रयम् । मृदूनि रेवतीचित्रानुराधामृगाः । क्षिप्राण्यश्विनीहस्तपुष्याः । उग्राणि पूर्वात्रयं भरणी मघा च । चराणि धनिष्ठापुनर्वसुश्रवणस्वातिशततारकाः । क्रूराणि ज्येष्ठार्द्रामूलानि । मिश्रितानि विशाखाकृत्तिकाः । वारभेदेऽपि तान्येव देवीपुराणे—

"सूर्ये घोरा विधौ ध्वाङ्क्षी भौमवारे महोदरी ।
बुधे मन्दाकिनी नाम मन्दा सुरपुरोहिते ॥
मिश्रिता शुक्रवारे स्याद् राक्षसी स्याच्छनैश्चरे" । इति ।

अत्र स्नानं नित्यम्,

"संक्रान्तौ यानि दानानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
रविसंक्रमणे प्राप्ते न स्नायाद् यस्तु मानवः ।
सप्त जन्मानि रोगी स्याद् निर्धनश्चैव जायते ॥"

इति शातातपीयेऽनिष्टश्रुतेः ।

मेषादिसंक्रमणे दानविशेषमाह विश्वामित्रः—

"मेषसंक्रमणे भानोर्मेषदानं महाफलम् ।
वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥

वस्त्रान्नपानदानानि मिथुने विहितानि तु ।
घृतधेनुप्रदानं तु कर्कटे परिशस्यते ॥
ससुवर्णं पात्रदानं सिंहे च विहितं सदा ।
कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥
तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च" ॥

कीटप्रवेशे वृश्चिकप्रवेशे ।

"धनुःप्रवेशे वस्त्राणां पानानां च महाफलम् ।
झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥
कुम्भप्रवेशे दानं तु गवां मृदुतृणस्य च ।
मीनप्रवेशे ह्यम्लानमाल्यानामपि चोत्तमम्" ॥

दानान्यथैतानि मया द्विजेन्द्राः ! प्रोक्तानि काले तु नरः प्रदत्वा ।
प्राप्नोति कामं मनसस्त्वभीष्टं तस्मात्प्रशंसन्ति हि कालदानम् ॥

अयने विषुवे च विशेष उक्तो बृहद्वसिष्ठेन—

"अयने विषुवे चैव त्रिरात्रोपोषितः पुमान् ।
स्नात्वाऽथोऽर्चयते भानुं सर्वकामफलं लभेत्" ॥

सिंहसंक्रान्तौ विशेषोऽद्भुतसारे नारदेनोक्तः—

"भानौ सिंहगते चैव यस्य गौः सम्प्रसूयते ।
मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥
ततः शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत्" ॥ इति ।

अत्र शान्तिः श्रीमातामहकृतशान्तिमयूखे द्रष्टव्या। मकरसंक्रांतौ विशेषो विष्णुधर्मोत्तरे—

"उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम्।

तिलपूर्वमनड्वाहं दत्वा रोगैः प्रमुच्यते ॥" इति।

विष्णुरहस्येऽपि—

"तस्यां कृष्णतिलैः स्नानं कार्यं चोद्वर्तनं तिलैः।

तिला देयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे ॥

तिलांश्च भक्षयेत्पुण्यान् होतव्याश्च तथा तिलाः।

तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः ॥" इति।

इदं च दानादिकं पुण्यकाले कार्यम्। पुण्यकालस्तु सामान्यत उक्तो देवलेन—

"संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः।

तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥" इति।

अत्राधस्त्रिंशदूर्ध्वं त्रिंशदिति केचित्। तत्त्वं तूर्ध्वमधश्चेति मिलित्वा त्रिंशदिति। तदुक्तं देवीपुराणे—

"अतीतानागते भोगे नाड्यः पञ्चदश स्मृताः।" इति।

भोगो विहितस्नानाद्यनुष्ठानम्। शातातपः—

"या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।" इति

अथ विशेषः स्कान्दे—

"कुलीरे विंशदेवाद्या मकरे विंशदुत्तराः।" इति।

कुलीरः कर्कटः। बौधायनः—

"पुण्यं विषुवति प्रोक्तं दशपूर्वा दशापराः ।" इति ।

स्कान्दे—

"षडशीतिमुखेऽतीते नाड्यः पञ्चदश स्मृताः ।" इति ।

वसिष्ठः—

"पुण्यकालो विष्णुपद्याः प्राक् पश्चादपि षोडशः ।" इति ।
यदा पूर्वभोगिनी संक्रान्तिः सूर्योदयोत्तरमुत्तरभोगिनी सूर्यास्तादव्यवधानेन द्वित्रिपलव्यवधानेन वा पूर्वं भवति तदा पुण्यकालमाह वृद्धवसिष्ठः—

"अह्नि संक्रमणे कृत्स्नमहःपुण्यं प्रकीर्तितम्" । इति ।

रात्रौ संक्रमणे विशेषमाह स एव—

"रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः" । इति ।

गोभिलोऽपि—

"रात्रौ संक्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियाम् ।
पूर्वस्मात् परतो वापि प्रत्यासत्तेश्च तत्फलम् ॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊद्र्ध्वं संक्रमणे चोर्ध्वमुदयात् प्रहरद्वयम् ॥
पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥" इति ।

रात्रावयने विशेषो भविष्योत्तरे—

"मिथुनात् कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः ॥

कार्मुकं तु परित्यज्य झषं संक्रमते रविः।

प्रदोषे वार्द्धरात्रे वा स्नानं दा ं परेऽहनि ॥" इति।

बौधायनोऽपि—

"अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने।

पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥

अस्तं गते सवितरि मकरं याति भास्करः।

प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥" इति।

वृद्धगार्ग्योऽपि—

"यद्यस्तमयवेलायां मकरं याति भास्करः।

प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥" इति।

यस्तु—"राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।

स्नानदानादिकं कार्य्यं निशि काम्यव्रतेषु च॥"

इति योगिवचनाद् रात्रिसंक्रमणे निश्यपि स्नानदानादिविधिः—तस्य देशाचारेण व्यवस्था बोध्या। हेमाद्रौ ब्रह्मपुराणे—

"शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः।

महाजया तदा सा वै सप्तमी भास्करप्रिया॥

स्नानं दानं तपो होमः पितृदेवादिपूजने।

सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा॥

यस्त्वस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम्।

सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत्॥

पयसा स्नापयेद् यस्तु भास्करं भक्तिमान्नरः ।
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ।।" इति ।

अत्र मकरसंक्रान्तेरुत्तरमृतुत्रयात्मकमुत्तरायणम् । कर्कसंक्रान्ते-रुत्तरमृतुत्रयात्मकं दक्षिणायनं चोक्तं रत्नमालायाम्—

"शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम् ।
भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुतां च सा ।।"

इति । ऋतुरत्र सौरात्मको ज्ञेयः,

"सौरर्तुत्रितयं प्रदिष्टमयनं च" इति दीपिकायामुक्तेः ।

सौरर्तुस्तूक्तो रत्नमालायाम्—

"मृगादिराशिद्वयभानुभोगात् षडर्तवः स्युः शिशरो वसन्तः ।
ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः।।"इति ।

मृगो मकरः । उत्तरायणे गृहप्रवेशादिकर्म प्रशस्तमुक्तं ज्योतिः-शास्त्रे—

"गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धदैवम् ।
सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे च ।।"

तथैव सत्यव्रतः—

"देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् ।।" इति ।

नारसिंहाद्युग्रदेवतानां दक्षिणायनेऽपि प्रतिष्ठा कार्या ।

तदुक्तं वैखानससंहितायाम्—

"मातृभैरववाराहनारसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥" इति ।

प्रतिष्ठायां विशेषस्तु मनीषिभिर्मत्कृतप्रतिष्ठापद्धतौ द्रष्टव्य इति दिक् ।

अथाश्विनशुक्लदशमी विजयदशमी ।

अस्यामपराह्णव्यापिन्यामपराजितां देवीं सम्पूज्य सीमोल्लङ्घनं कार्यम् । आश्विनशुक्लपक्षं प्रक्रम्योक्तं स्कान्दे—

"दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता ।
ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ॥" इति ।

तत्रैव—

"आश्विनस्य सिते पक्षे दशमी नवमीयुता ।
सीमानं क्रमयेत्तस्यां मुहूर्ते विजयाभिधे ॥
दशम्येकादशीयुक्ता न कार्या जयकाङ्क्षिभिः ।" इति ।

विजयकाल उक्तो धर्मचिन्तामणौ—

"आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ॥" इति ।

रत्नकोशेऽपि—

"ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः ॥" इति ।

इयं तिथिद्वैधे यद्युत्तरैव श्रवणयुक्ता तदाऽपराजितापूजनसीमोल्लङ्घनादौ सैव कार्या, श्रवणयोगस्याधिक्यात् ।

तदुक्तं व्रतहेमाद्रौ कश्यपेन—

"उदये दशमी किञ्चित् सम्पूर्णैकादशी यदि ।
श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ॥
श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ॥" इति ।

अन्येषु सर्वपक्षेषु नवमीयुक्ता ग्राह्या,

"या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता ।
क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः ॥
नवमीशेषयुक्तायां दशम्यामपराजिता ।
ददाति विजयं देवी पूजिता जयवर्द्धिनी ॥
आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः ।
एकादश्यां न कुर्वीत पूजनं चाऽऽपराजितम् ॥"

इति स्कान्दोक्तेः । अत्र यथौदयिकस्वल्पदशम्या एव श्रवणयोगे 'यां तिथिम्' इत्यादिना साकल्यमादायापराह्णेऽपराजिता-पूजनं भवति । नैवं पक्षान्तरेषूचितमिति ज्ञापनार्थमुक्तम् "एकादश्यां न कुर्वीत" इति । अस्यामेव दशम्यां सायंकाले देशान्तरयात्रिभिर्नरैः देशान्तरे यात्रा कार्या,

"आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।
सायंकाले शुभा यात्रा दिवा वा विजयक्षणे ॥
एकादशमुहूर्तो यो विजयः परिकीर्तितः ।
तस्मिन् सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः ॥"

इति भृगूक्तेः। अत्र सर्वराशिष्विति कथनाच्चन्द्रानुकूल्यं नापेक्ष्यमित्याशयः। ननु सायंकाले यात्रा विहिता पुनरपि तस्मिन्नेव वाक्ये दिवा विजयलक्षणे काले च विहिता। तथा च विरोध इति चेन्नैवं; यदा दिनद्वयेऽपि सायंकालावच्छेदेन दशमी न तदा द्वितीयदिन एकादशमुहूर्ते यात्रा विधातव्येत्येतदर्थमेकादश्यां यात्रानिषेधात्।

तथा च स्कान्दे स्मर्यते—

"दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत्॥" इति

अस्यां कृत्यमुक्तं भविष्ये—

शमीं सलक्षणोपेतामीशानाशाप्रतिष्ठिताम्।
सम्प्रार्थ्य तां च सम्पूज्य ईशानीसन्मुखो भवेत्॥

प्रार्थनामन्त्रौ तत्रैव—

"शमी शमयते पापं शमी लोहितकण्टका।
*धारयत्र्यर्जुनास्त्राणां रामसंवाददायिनी॥
करिष्यमाणयात्रायां यथाकालं सुखं मम।
तत्र निर्विघ्नकर्त्री त्वं भव रामप्रपूजिता॥" इति।
"गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम्।
गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति॥

---

* 'धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी' इत्यपि पाठः स्मर्यते।

ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ।" इति ।

राज्ञां विशेषोऽत्र हेमाद्रौ—

"मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम् ।
अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ॥
दुःस्वप्नशमनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।
रिपोः प्रतिकृतिं कृत्वा ध्यात्वा वा मनसाऽथ तं ॥
शरेण स्वर्णपुङ्खेन विद्ध्येद् हृदयमर्मणि ।
पूज्यान् द्विजांश्च सम्पूज्य वस्त्राद्यैश्च पुरोहितान् ॥
गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत् ।
जयमङ्गलशब्देन ततः स्वभवनं विशेत् ॥
नीराज्यमानः पुण्याभिर्गणिकाभिः सुमङ्गलम् ।
य एवं कुरुते राजा वर्षे वर्षे महोत्सवम् ॥
आयुरारोग्यमैश्वर्यं विजयं च स गच्छति ।" इति ।

अपरार्के पुराणसमुच्चये—

"कृत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमम् ।
शोभनं स्वजनं पश्येज्जलगोष्ठादिसन्निधौ ॥"

इयं पट्टाभिषेके परा ग्राह्या,

"ईशस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत् ।
श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने ॥"

इति ज्योतिर्निबन्धे नारदोक्तेः ।

अस्यां तैलाभ्यङ्गं कुर्यात्,

"श्रावण्यां बलिराज्ये च वसन्ते वत्सरे तथा ।
उत्सवेषु च सर्वेषु दमने च पवित्रके ॥
तैलाभ्यङ्गं प्रकुर्वीत न शुद्धं स्नानमाचरेत् ।
बलिराज्ये वसन्ते च विजये श्रावणीदिने ॥
तैलाभ्यङ्गो न दुष्येत सङ्क्रान्त्यर्ककुजादिभिः ।"

इति वचनात् ।

अथ दशादित्यव्रतम् । यदा शुक्लदशम्यां भानुवारस्तदा कार्यम् । तदुक्तं भविष्ये—

"वक्ष्ये सौरव्रतं पुण्यं दुर्दशानाशकारकम् ।
भानुवारे सिते पक्षे दशम्यां चैव नारद ! ॥" इति ।

अथ दशमीनियमा हेमाद्रौ कौर्मे—

"कांस्यं मांसं मसूरं च चणकान् कोरदूषकान् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियः ॥"

उपवसन् उपवासं करिष्यन्नित्यर्थः । स्कान्दे—

"कांस्यं मासं मसूरं च क्षौरं चाऽनृतभाषणम् ।
पुनर्भोजनमभ्यासं दशम्यां परिवर्जयेत् ॥" इति ।

दशमी गुरुवारेण सिद्धा । भौमेन क्रकचाख्या विरुद्धा । योगिन्यस्यामुत्तरस्याम् । इति दशमी निर्णीता ।

अथैकादशी निर्णीयते । तत्रादावेकादशीमहिमा हेमाद्रौ गारुडे—

"एकादशीव्रतं भक्त्या यः करोति सदा नरः ।
स विष्णुलोकं व्रजति याति विष्णोः सरूपताम् ।।" इति ।

नारदीयपुराणे—

"यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।।
तानि पापान्यवाप्नोति भुञ्जानो हरिवासरे ।"

तथा—"वैष्णवो वाथ शैवो वा कुर्यादेकादशीव्रतम् ।"

अग्निपुराणे—

"एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम् ।" इति ।

अत्र केषुचिद् वाक्येषु श्रूयमाणो 'न भुञ्जीत' इति नञ् न भोजनप्रतिषेधार्थः, किन्तु व्रतशब्दसमानाधिकरण्यात् 'नेक्षेतोद्यन्तमादित्यम्' इतिवत् पर्युदासवृत्त्या भोजनप्रतियोग्यभोजनसङ्कल्पप्रतिपादकः तेन हेतुना तैर्वचनैरभोजनसङ्कल्परूपमुपवासाख्यं व्रतं विधीयते । अत्राधिकारिण आह कात्यायनः—

"अष्टवर्षाधिको मर्त्यो अपूर्णाशीतिवत्सरः ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।।"

इदं गृहिव्यतिरिक्तपरम्,

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वानप्रस्थो यतिश्चैव शुक्लामेव सदा गृही ।।"

इति कूर्मपुराणात् । इदं च व्रतं शक्तिमता कार्यम् । तथा च ब्रह्मवैवर्ते—

"एकादशीं विना विप्र ! न संसाराद्विमोक्षणम् ।
तत्राऽप्ययं विशेषोऽस्ति कार्या शक्तिमता च सा ॥
न तु देहं विदुः प्राज्ञाः पीडनीयमिहाग्रहात् ।
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥" इति ।

असामर्थ्ये प्रकारो वाराहे—

"असामर्थ्ये शरीरस्य व्रते तु समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ।
शृणु यश्चान्यमुद्दिश्य एकादश्यामुपोषितः ॥
यमुद्दिश्य कृतो विप्रास्तस्य पूर्णं फलं भवेत् ।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥" इति ।

प्रकारान्तरमाह बौधायनः—

"उपवासे त्वशक्तानामशीतेरूर्द्ध्वजीविनाम् ।
एकभक्तादिकं कार्यमाह बौधायनो मुनिः ॥" इति ।

आदिपदेन नक्तायाचिते गृह्येते। नक्तभोजिनो विशेषमाह व्यासः—

"हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥" इति ।

तृतीयप्रकारो हेमाद्रौ पुराणे—

"उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनादिकं दद्याद् यद्भक्ताद् द्विगुणं भवेत् ॥

सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ।

कुर्याद् द्वादशसंख्याकान् यथाशक्ति च सो (?)नरः ॥" इति

नारी तु भर्त्राद्यनुज्ञयैव व्रतं कुर्यात्,

"नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन च ।

निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् ॥"

इति मार्कण्डेयपुराणात् ।

यत्तु मनुविष्णुभ्यामुक्तम्—

"नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।

पत्यौ जीवति या नारी उपवासव्रतं चरेत् ॥

आयुः संहरते भर्त्तुर्नरकं चैव गच्छति ।" इति,

तद्भर्त्राद्यननुमतोपवासविषयमिति हेमाद्रिः । शुद्धोपवासविषय-मिति सारम् ।

अथैकादशीव्रतं सूतकेऽपि कार्यमित्युक्तं हेमाद्र्यपरार्कयोर्वराहपुराणे—

"सूतके तु नरः स्नात्वा प्रणम्य मनसा हरिम् ।

एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥

एकादश्यां ततोऽभुक्त्वा सूतकान्ते जनार्दनम् ।

पूजयित्वा विधानेन पूजयेच्च द्विजोत्तमान् ॥

मृतके तु न भुञ्जीत एकादश्यां सदा नरः ।

द्वादश्यां तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य च ॥" इति ।

पुलस्त्यः—

"एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि ।" इति ।

उपवासदिने वर्जनीयमाह सुमन्तुः—

"विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहम् ।

निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥" इति ।

देवलः—

"ब्रह्मचर्य्यमहिंसा च सत्यमामिषवर्जनम् ।

व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ॥" इति ।

ब्रह्मचर्ये भेदकान्याह स एव—

"स्त्रीणां तु प्रेक्षणात् स्पर्शात् ताभिः संकथनादपि ।

भिद्यते ब्रह्मचर्यन्तु न दारेष्वृतुसङ्गमात् ॥"

अत्र प्रेक्षणादिकं सरागमेव ग्राह्यम् । तेन मातृतत्तुल्यादिदर्शने न दोषः । उपवासदूषकाण्यपि स एवाह—

"असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात् ।

उपवासः प्रदुष्येत दिवास्वापाच्च मैथुनात् ॥" इति ।

अथोपवासनियमेषु नित्यकाम्योपवासभेदाद्विशेषः कथ्यते । तत्र देवलः—

"दशम्यामेकभुक्तस्तु मांसमैथुनवर्जितः ।

एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥" इति ।

अयञ्चैकभक्तादिनियमः काम्योपवासे न तु नित्योपवासे,

"सायमाद्यं तयोरह्नोः सायं प्रातश्च मध्यमे ।

उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयम् ॥

नित्योपवासी यो मर्त्यः सायं प्रातर्भुजिक्रियाम् ।
संत्यजेन्मतिमान् विप्रः सम्प्राप्ते हरिवासरे ॥"

इति विष्णुवचनात् । विप्र इत्युपवास्युपलक्षणम् ।
कांस्यमांसनिषेधा अपि पूर्वोक्ताः काम्योपवासविषये एव व्यवतिष्ठन्ते,

"कांस्यं मांसं मसूरञ्च पुनर्भोजनमैथुने ।
द्यूतं मद्याम्बुपानं च फलमेप्सुर्विवर्जयेत् ॥"

इति विष्णुधर्मोत्तरात् । मांसमद्ययोर्येषां प्राप्तिस्तेषामेव निषेधः । अम्बुपानमसकृत् । उक्तनियमोपेतः कर्त्ता स्नानोत्तरमुपवासं सङ्कल्पयेत् । तत्र मन्त्रमाह देवलः—

"एकादश्यां निराहारो भूत्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष ! गतिर्भव ममाच्युत ! ॥" इति ।

फलाहारपक्षे फलाहारो भूत्वेति कल्प्यम् । क्वचित्तु स्थित्वाहमित्यपि पाठः ।

अथैकादशीनिर्णयः । सा द्वेधा, शुद्धा दशमीविद्धा च । तत्र शुद्धा त्रिविधा, द्वादश्यधिकोभयाधिकानुभयाधिकभेदात् । यत्तु माधवाचार्यादिभिः शुद्धायाश्चातुर्विध्यमुक्तम्, तन्न मनोहरम्, आद्यभेदस्यैवासम्भवात्, तथाहि । एकादश्याधिक्ये नारदवाक्यं लिखितम्—

"सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् ॥"

तत्रैतादृशतिथिवृद्ध्यनन्तरमुत्तरतिथेराकस्मिको ह्येतादृशो ह्रासो दुर्लभः । वचनं तु वक्ष्यमाणस्मार्तैकादशीनिर्णायकस्कान्द-वचनार्थेन समानं बोध्यम् ।

तत्रादौ वैष्णवान् प्रति शुद्धोक्ता गारुडे—

"उदयात्प्राग्यदा विप्र ! मुहूर्तद्वयसंयुता ।
सम्पूर्णैकादशी ज्ञेया तत्रैवोपवसेद् गृही ॥"

सम्पूर्णा शुद्धेत्यर्थः । गृही वैष्णवः ।

भविष्यपुराणे—

"अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ॥
दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥"

अरुणोदयस्वरूपं हेमाद्रौ स्मृत्यन्तरे—

"निशि प्रान्ते तु यामार्द्धे देववादित्रवादने ।
सारस्वतानध्ययने चारुणोदय उच्यते ॥"

वैष्णवलक्षणन्तु स्कान्दे—

"परमापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेद् यस्तु यस्य दीक्षा तु वैष्णवी ॥
समात्मा सर्वभूतेषु निजाचारादविप्लुतः ।
विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते ॥" इति ।

द्वादश्याधिक्ये स्कान्दे—

"पूर्णाप्येकादशी त्याज्या वर्द्धते द्वादशी यदि ।
द्वादश्यां लङ्घनं कार्यं द्वादश्यामेव पारणा ॥"

इति । उभयाधिक्ये भृगुः—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥"

इति वैष्णवान् प्रति एकादशीनिर्णयः । अथ पञ्चरात्राद्यागमदीक्षा-हीनाः स्मार्ता इति व्यवह्रियन्ते, तेषामेकादशी निर्णीयते । सापि द्वेधा, शुद्धा सूर्योदयकाले दशमीसत्त्वेन विद्धा च,

"सूर्योदयस्पृशा ह्येषा दशम्या गर्हिता सदा ।" इति स्मृतेः;
"अतिवेधादयः पूर्वे ये वेधास्तिथिषु स्मृताः ।
सर्वेऽप्यवेधा विज्ञेया वेधः सूर्योदये स्मृतः ॥"

इति स्मृत्यन्तरवचनाच्च । तत्र शुद्धा चतुर्द्धा—केवलैकाद-श्यधिका, केवलद्वादश्यधिका, उभयाधिका, अनुभयाधिका चेति । तत्रैकादश्याधिक्ये स्कान्दे—

"प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्रसंयुता ।
द्वादश्यां तु तथा तात ! दृश्यते पुनरेव सा ॥
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो ! ।" इति ।

एतच्च परे द्युद्वादश्यभावे विज्ञेयम् । तथा च स्मृत्यन्तरे—

"पुनः प्रभातसमये घटिकैका यदा भवेत् ।"

एकादशीत्यर्थः ।

"अत्रोपवासो विहितश्चतुर्थाश्रमवर्णिनाम् ।
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ॥" इति ।

अत्र गृहस्थयतिपदे सकामनिष्कामपरे ज्ञेये,

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
पूर्वामुपवसेत्कामी निष्कामस्तूत्तरां वसेत् ॥"

इति मार्कण्डेयवचनात् । द्वादश्याधिक्ये नारदः—

"न चेदेकादशी विष्णौ द्वादशी परतः स्थिता ।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् ॥" इति ।

उभयाधिक्ये तु सर्वैः परा कार्या । तदुक्तं गारुडे—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥"

पाद्मेऽपि—

"अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि ।"

अनुभयाधिक्ये तूत्तराप्रापकप्रमाणाभावात् पूर्वैव ।

अथ विद्धापि चतुर्विधा । तत्र विद्धैकादशीमात्राधिक्ये गृहिणो विद्धायामेवोपवासः । तदुक्तं प्रचेतसा—

"एकादशी विद्धा चेच्छुक्ले कृष्णे विशेषतः ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद् गृही ॥" इति ।

विद्धायां द्वादशीमात्राधिक्ये तु परेद्युरुपवासः । तदुक्तं ब्रह्मवैवर्ते व्यासेन—

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ।। इति ।

पूर्वदिने दशमीसंयोगात्परदिने वृद्ध्यभावाच्च लुप्तेति निर्देशः । विद्धायामुभयाधिक्ये तु परैव ।

शुद्धायामुभयाधिक्ये परा चेत् क्रियते, तदा विद्धायां किमु वक्तव्यम्, इति कैमुतिकन्यायात् । विद्धायामनुभयाधिक्ये तु विद्धामेवोपोषयेत्,

"यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयम् ।
तत्र क्रतुशतं पुण्यं पारणे द्वादशी भवेत् ।।" इति नारदीयात् ।

इदं व्रतम्,

"न करोतीह यो मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसावृतम् ।।"

इति सनत्कुमारवचनान्नित्यम् । काम्यश्चोक्तं कौर्मे--

"यदीच्छेद् विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।।" इति ।

काम्यस्यास्यासमापने दोष उक्तो परार्के—

"परिगृह्य व्रतं सम्यगेकादश्यामुपोषणम् ।
न समापयते यस्तु स याति नरकं नरः ।।" इति ।

नैमित्तिककाम्यावुपवासौ तु कृष्णायामपि विधेयौ ।
तत्र नैमित्तिकं माधवीये स्मृत्यन्तरे—

"शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥" इति ।

काम्यन्तु तत्रैव स्कन्दपुराणे—

"पितॄणां गतिमन्विच्छन् कृष्णायां समुपोषयेत् ।" इति ।

दिनक्षये पुत्रवद्गृहस्थेनोपवासो न कार्यः । तदाह पितामहः—

"एकादश्यां दिनक्षये उपवासं करोति यः ।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डतो यथा ॥" इति ।

दिनक्षय उक्तः पाद्मे—

"द्वौ तिथ्यन्तावेकवारे यस्मिन् सः स्याद्दिनक्षयः ।" इति ।

वसिष्ठः—

"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥"

उपवासनिषेधेऽनुकल्प उक्तो वायवीये—

"उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत् ।
न दुष्यत्युपवासेनोपवासफलं लभेत ॥"

भक्ष्याण्यपि तत्रैव—

"नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च ॥" इति ।

अत्रोपस्थितत्वाद् हविष्याण्युच्यन्ते परिशिष्टे—

"हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वाभावेऽपि वर्जयेत् ।।" इति ।

भविष्योत्तरेऽपि—

"हैमन्तिकं सितास्विन्नं धान्यमुद्गा यवास्तिलाः ।
कलायकं गुनीवारा वास्तूकं हिलमोचिका ।।
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे लवणे मधुसर्पिषी ।।
पयोऽनुधृतसारं च पनसाम्रं हरीतकी ।
पिप्पली जीरकञ्चैव नागरङ्गश्च तिन्तिणी ।।
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ।।"

हेमन्ते भवं हैमन्तिकं वस्तु । तदप्यनिषिद्धं ग्राह्यम् । सितास्विन्नं सितया वालुकया स्विन्नं भर्जितम् । धान्यं तण्डुलाः । कलायाः सतीनकाः । "कलायस्तु सतीनकः" इत्यमरः । लोके मटरधान्यमुच्यते । वास्तूकं वथुवेति प्रसिद्धः शाकः । हिलमोचिका हिलसा । कालशाकः कालकम्, मरिचेति हिन्दीभाषायां प्रसिद्धम् । केमुकं केमुत्रा मूलकविशेषः । नागरङ्गं नारिङ्गम्, 'ऐरावतो नागरङ्गो नारिङ्गो भूमिजम्बुके' इत्यमरात् । यत्तु नारङ्गं शुङ्गीति व्याख्यातं सिन्धौ तत्र मूलं मृग्यम् । लवली हर्फारेवडीति लोके प्रसिद्धा । अतैलपक्वमित्युक्तद्रव्याणां विशेषणम् । अत्र पयःसर्पिषी गव्ये इत्यस्तु प्रसङ्गागतम् ।

अथ प्रकृतमनुसंधीयते ।

एकादश्यां भोजने प्रायश्चित्तं स्मृत्यन्तरे—

"अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।

एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥" इति ।

अथ चैत्रशुक्लैकादश्यां दमनेनार्चयित्वा विष्णुरान्दोलनीयः ।
तदुक्तं निर्णयामृते ब्रह्मपुराणे—

"चैत्रमासस्य शुक्लायामेकादश्यान्तु वैष्णवैः ।

आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवे ॥

दमनेनाऽर्चयित्वाऽथ रात्रौ जागरणं चरेत् ।" इति ।

अथ दमनकानयनप्रकार उक्तोऽगस्त्यसंहितायाम्—

"प्रातः स्नात्वा समभ्यर्च्य देवेशं विधिवन्नरः ।

उपवासेन देव ! त्वां तोषयामि जगत्पते ! ॥

कामक्रोधादयो ह्येते न मे स्युर्व्रतघातकाः ।

एवं विज्ञाप्य देवेशं गुरुपादौ प्रणम्य च ॥

गच्छेद्दमनकाराममेकादश्यां सुशोभितम् ।

क्रमेणाऽऽगत्य तत्रैव पूजयेच्चन्दनादिना ॥

नेष्यामि रामपूजार्थमिति सम्प्रार्थ्य तन्नमेत् ।

उत्पाट्य पञ्चगव्येन प्रोक्ष्य प्रक्षाल्य वारिणा ॥

धौतेन वाससाऽऽच्छाद्य निधाय पटले नवे ।

पटले वंशादिपात्रे ।

घण्टापुरुषसूक्तादिस्वनैः स्वगृहमानयेत् ॥"

इत्यानीय, किञ्चिद्देवाय दत्वा प्रार्थयेत् ।

"आमन्त्रितोऽसि देवेश ! पुराणपुरुषोत्तम ! ।
अतस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ॥"

इत्थमामन्त्र्य, पुष्पाञ्जलिं दत्वा, उर्वरितं दमनकं सम्पूज्य प्रातः पूजार्थं स्थापयेत् । अस्यां वैशाखस्नानारम्भ उक्तः पाद्मे—

"मधुमासस्य शुक्लायामेकादश्यामुपोषितः ।
पञ्चदश्यां च भो वीर ! मेषसङ्क्रमणेऽपि वा ॥
वैशाखे स्नाननियमं ब्राह्मणानामनुज्ञया ।
मधुसूदनमभ्यर्च्य कुर्यात्सङ्कल्पपूर्वकम् ॥" इति ।

सङ्कल्पमन्त्रस्तत्रैव—

"वैशाखं सकलं मासं मेषसङ्क्रमणे रवेः ।
प्रातः सनियमं स्नास्ये प्रीयतां मधुसूदनः ॥
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् ।
निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥
माधवे मेषगे भानौ मुरारे ! मधुसूदन ! ।
प्रातःस्नानेन मे नाथ ! फलदो भव पापहन् ! ॥" इति ।

स्नानार्थं तीर्थान्युक्तानि तत्रैव—

"मेषसङ्क्रमणे भानौ माधवे मासि यत्नतः ।
महानद्यां नदीतीर्थे नदे सरसि निर्झरे ॥
देवखातेऽथवा स्नायाद्यथाप्राप्ते जलाशये ।
दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् ॥" इति ।

अत्र नियमा अपि तत्रैव—

"तुलसी कृष्णगौराख्या तयाऽभ्यर्च्य मधुद्विषम् ।
विशेषेण तु वैशाखे नरो नारायणो भवेत् ॥" इति ।

मदनरत्ने स्कन्दपुराणे—

"प्रपा कार्या च वैशाखे देवे देया गलन्तिका ।
उपानद्व्यजनच्छत्रसूक्ष्मवासांसि चन्दनम् ॥
जलपात्राणि देयानि तथा पुष्पगृहाणि च ॥"

इत्यादीनि दानान्यपीति संक्षेपः ।

ज्येष्ठशुक्लैकादशी निर्जलेत्युच्यते । अस्यां कुम्भादि-दानमुक्तं स्कान्दे—

"ज्येष्ठे मासि नृपश्रेष्ठ ! या शुक्लैकादशी भवेत् ।
निर्जलं समुपोष्याऽत्र जलकुम्भान् सशर्करान् ॥
प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधौ ।"

इति । हेमाद्रौ व्यासः—

"स्नाने चाचमनं चैव वर्जयित्वोदकं बुधः ।
उपयुञ्जीत नैवान्यद् व्रतभङ्गोऽन्यथा भवेत् ॥" इति ।

आषाढशुक्लैकादशी शयनी,

"एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते क्षीरार्णवजले सदा ॥"

इति हेमाद्रौ ब्राह्मात् । इदं च शयनमधिमासे न कार्यम्,

"मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥"

इति मोहचूडोत्तरोक्तेः; अधिमासे न कार्यमित्यनुवृत्तौ,

"ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम्"

इति कालादर्शोक्तेश्च । स्वापविधिर्भविष्ये—

"महापूजां ततः कृत्वा देवदेवस्य चक्रिणः ।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ॥

मन्त्रस्तु—

त्वयि सुप्ते जगन्नाथे जगत्सुप्तं भवेदिदम् ।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाऽच्युत ! ॥" इति ।

वामनपुराणे तु द्वादश्यां शयनमुक्तम्—

"एकादश्यां जगत्स्वामिन् ! शयनं परिकल्पयेत् ।
शेषाहिभोगपर्यङ्कं कृत्वा सम्पूज्य केशवम् ॥
अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः ।
लब्ध्वा पीताम्बरधरं स्वस्ति निद्रां समानयेत् ॥" इति ।

स्वापस्तु मतद्वयेऽपि रात्रावेव करणीयः । वचनन्त्वग्रे वक्ष्यते । अत्रैव पूजां विधाय चातुर्मास्यव्रतारम्भ उक्तो भारते—

"आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियमो नरः ॥" इति ।

अन्येऽपि कालाः सनत्कुमारवराहाभ्यामुक्ताः—

"एकादश्यां तु गृह्णीयात्सङ्क्रान्तौ कर्कटस्य वा ।

आषाढ्यां वा नरो भक्त्या चातुर्मास्येोदितं व्रतम् ॥
आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा ।" इति ।

अत्र व्रतारम्भेऽस्तादिदोषो नास्ति,

"न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः ।
खण्डत्वं चिन्तयेज्जातु चातुर्मास्यव्रते विधौ ॥"

इति गार्ग्यवचनात् । व्रतानि तु भविष्ये—

"श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥" इति ।

चत्वारीमानि नित्यानीत्युक्तं स्कान्दे चातुर्मास्यप्रकरणे—

"चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनाम् ।
प्रथमे मासि कर्त्तव्यं नित्यं शाकव्रतं नरैः ॥
द्वितीये मासि कर्त्तव्यं दधिव्रतमनुत्तमम् ।
पयोव्रतं तृतीये तु चतुर्थे द्विदलं त्यजेत् ॥" इति ।

त्यजेद् वर्जनसङ्कल्पं कुर्यादित्यर्थः । शाकं दशधेत्याह क्षीरस्वामी—

"मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः ।
त्वक् पुष्पं कवचञ्चेति शाकं दशविधं स्मृतम् ॥" इति ।

'करीरम्' शिम्बी । 'काण्डम्' नालम् । 'अधिरूढम्' अङ्कुरम् । 'कवचम्' उरगकवचवत्सूक्ष्मा त्वगेव । द्विदलान्युक्तानि स्कान्दे—

"माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः ॥
निष्पावा राजमाषाश्च आढको द्विदलं स्मृतम् ॥" इति ।

केचिदुत्पत्तिसमये यस्य दलद्वयं तद् द्विदलमित्याहुस्तत्र मूल-वाक्यं गवेषणीयम् ।

अथ चातुर्मास्ये वर्ज्यानि स्कान्दे—

"वार्षिकांश्चतुरो मासान् प्रसुप्ते वै जनार्दने ।
मञ्चखट्वादिशयनं वर्जयेद्भक्तिमान्नरः ॥
अनृतौ वर्जयेद्भार्य्यां मांसं मधु परौदनम् ।
पटोलं मूलकं चैव वृन्ताकं च न भक्षयेत् ॥
अभक्ष्यं वर्जयेद्दूरान्मसूरं सितसर्षपम् ।
राजमाषान् कुलत्थांश्च आशुधान्यञ्च सन्त्यजेत् ॥"

तथा—

"वृन्ताकं च कलिङ्गं च बिल्वोदुम्बरभिःसटाः ।
उदरे यस्य जीर्यन्ते तस्य दूरतरो हरिः ॥"

तथा—

"निष्पावराजमाषांश्च मसूरं सन्धितानि च ।
वृन्ताकञ्च कलिङ्गञ्च सुप्ते देवे विवर्जयेत् ॥
विशेषाद्बदरीं धात्रीं कूष्माण्डं तिन्तिणीं त्यजेद् ।
जीर्णं धात्रीफलं ग्राह्यं कथञ्चित् कायशोधनम् ॥" इति ।

अथ काम्यानि हेमाद्रौ भविष्ये—

"स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः ।
गृह्णीयान्नियमानेतान् दन्तधावनपूर्वकान् ॥
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् ।

मधुस्वरो भवेद्राजा पुरुषो गुडवर्जनात् ॥
तैलस्य वर्जनाद्राजन् ! सुन्दराङ्गः प्रजायते ।
कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् ॥
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ।
ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते ॥
घृतत्यागाच्च लावण्यं सर्वस्निग्धतनुर्भवेत् ।
फलत्यागाच्च मतिमान् बहुपुत्रश्च जायते ॥
शाकपक्वाशनाद्भोगी अपक्वादमलो भवेत् ।
भूमौ प्रस्तरशायी च विप्रो मतिवरो भवेत् ॥
एकान्तरोपवासेन ब्रह्मलोके महीयते ।
पादाभ्यङ्गपरित्यागाच्छिरोभ्यङ्गविवर्जनात् ॥
दीप्तिमान् दीप्तकरणो यक्षो द्रव्यपतिर्भवेत् ।
दधिदुग्धतक्रनियमो गोभक्तो गोपतिर्भवेत् ॥
इन्द्रातिथित्वमाप्नोति स्थालीपाकस्य भक्षणात् ।
लभते सन्ततिं दीर्घां तैलपक्वविवर्जनात् ॥
धारणान्नखरोम्णां च गङ्गास्नानफलं लभेत् ।
मौनव्रती भवेद् यस्तु तस्याऽऽज्ञाऽस्खलिता भवेत् ॥
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ।
प्रदक्षिणाशतं यस्तु करोति स्तुतिपाठकः ॥
हंसयुक्तविमानेन स च विष्णुपुरं व्रजेत् ।
अयाचितेन प्राप्नोति पुत्रान् धर्म्मानशेषतः ॥

षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेद्दिवि ।
पर्णेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ॥
यामद्वयं जलत्यागान्न रोगैरभिभूयते ।
एवमादिव्रतैः पार्थ ! तुष्टिमायाति केशवः ॥" इति ।

एतेषां समाप्तौ दानानि—

"गुडवर्जी नरो दद्यात्तद्भृतं ताम्रभाजनम् ।
सहिरण्यं नरश्रेष्ठ ! लवणस्याप्ययं विधिः ॥" इति ।

प्रदक्षिणाशते वस्त्रम्, भूपर्णभोजने गौः कांस्यपात्रञ्च, मौने घृतकुम्भं वासोयुगं घण्टा च, ब्रह्मचर्ये स्वर्णप्रतिमा, ताम्बूले वस्त्रयुग्मम्, नक्ते च तत्, एकान्तरोपवासे गोदानम्, षष्ठकालभोजनेऽपि तत्, भूस्वापे शय्या; व्रीह्यादित्यागे हैमं तत्तद्धान्यम्, अनुक्तेषु गौः स्वर्णञ्च इति । अत्र मूलवचांसि व्रतहेमाद्रौ द्रष्टव्यानीति संक्षेपः । एतेष्वन्यतमव्रतमप्यस्यामेव ग्राह्यम् । ग्रहणप्रकारो भविष्ये—

"वभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तदा ।

'तदा' पूजोत्तरम् । [ 'वभाषेत' अवभाषेत ]

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
इदं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ! ॥
इदं व्रतं मया देव ! गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ! ॥

गृहीतेऽस्मिन् व्रते देव ! पञ्चत्वं यदि मे भवेत् ।
तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ! ॥" इति ।

श्रावणशुक्लैकादश्यां पवित्राधिवासनमुक्तं रामार्चनचन्द्रिकायाम्–

"स्नात्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ।
पृथक् पृथक् पञ्चगव्यैरद्भिः प्रक्षालयेन्नरः ॥
मूलेनाष्टोत्तरशतं गायत्र्या रामसंज्ञया ।
शङ्खोदकेनाभिमन्त्र्य पवित्राणि विनिर्ममेत् ॥"

विष्णुरहस्ये—

"कुङ्कुमोशीरकर्पूरैश्चन्दनादिविलेपनैः ।
पवित्राणि विलिप्याऽथ देवाग्रेऽधिवास्य च ॥
एकादश्यां शुभैर्गन्धैः पुष्पधूपविलेपनैः ।
दीपनैवेद्यवस्त्राद्यैः पूजयेद् गरुडध्वजम् ॥" इति ।

ततः प्रार्थनां कुर्यात् ।

"क्रियालोपविधानार्थं यत्त्वया विहितं प्रभो ! ।
मयैतत् क्रियते देव ! तव तुष्ट्यै पवित्रकम् ॥
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ।
निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् ॥
निपतेद्दण्डवद् भूमौ क्षिप्त्वा पुष्पाञ्जलिं ततः ।
गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं नरः ॥" इति ।

पवित्रार्पणविधिस्तु श्रावणशुक्लद्वादश्यां वक्ष्यते । अत्रैव दधिव्रतारम्भोऽपि कार्यः । दधिव्रते तक्रभक्षणं कार्यम्, तक्रे

दधिरसानुपलम्भात् । भाद्रशुक्लैकादश्यां विष्णोरङ्गपरिवतन-मुक्तं हेमाद्रौ भविष्ये—

"प्राप्ते भाद्रपदे मासि एकादश्यां दिने सिते ।
कटिदानं भवेद्विष्णोर्महापातकनाशनम् ॥" इति ।

'कटिदानम्' अङ्गपरिवर्तनम् । तत्र मन्त्रस्तिथितत्त्वे—

"वासुदेव ! जगन्नाथ ! प्राप्तेयं द्वादशी तव ।
पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ! ॥" इति ।

द्वादशीपदमत्र सन्निहितपरम् । अत्रैव दुग्धव्रतं स्वीकुर्य्यात् । दुग्धव्रते पायसादि वर्जयेत्, न तु दध्यादि । यत्र विकारे प्रकृतिद्रव्य-रसोपलम्भस्तत्प्रत्यभिज्ञानं वा, तस्य विकारस्य निषेधः । न चैवं सति सन्धिन्यनिर्दशावत्सगोपयः परिवर्जयेदिति वचनात्सन्धि-न्यादिक्षीरनिषेधे सन्धिन्यादिदुग्धसम्भूतस्य दध्नो ग्रहणं स्यादिति वाच्यम्,

"क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समन्वितः ॥"

इति शङ्खस्मृत्या तन्निषेधात् । 'व्रतम्' गोमूत्रपावकाशनम् । आश्विन-शुक्लैकादश्यां कार्तिकस्नानारम्भः कार्यः । तदुक्तं विष्णुरहस्ये—

"आरभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः ।
प्रातः स्नानं प्रकुर्वीत यावत्कार्त्तिकभास्करम् ॥" इति ।

अत्र सौरोऽपि मासो ग्राह्यः,

"तुलामकरमेषेषु प्रातः स्ना ं विधीयते ।

हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥"

इति पाद्मोक्तेः। अशक्तस्तु त्र्यहं स्नायात्,

"वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्त्तिके।

अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः ॥"

इति काशीखण्डात्। स्नानकालस्तूक्तः काशीखण्डे—

"कार्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः।

स्नास्यत्यनुदिते भानौ भानुजा तस्य भीः कुतः ॥" इति।

भानुजोऽन्तकः। स्नानमन्त्रस्तत्रैव—

"कार्त्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्दन !।

प्रीत्यर्थं तव देवेश ! दामोदर ! मया* सह ॥

इमं मन्त्रं समुच्चार्य मौनी स्नायाद् व्रती नरः।" इति।

अर्घ्यमन्त्रस्तत्रैव—

"व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम।

दामोदर ! गृहाणार्घ्यं दनुजेन्द्रनिषूदन ! ॥

नित्यनैमित्तिके कृष्ण ! कार्त्तिके पापशोधने।

गृहाणार्घ्यं मया दत्तं राधया सहितो हरे ! ॥" इति।

अत्र धात्रीसेवा कार्येत्युक्तं स्कान्दे कार्त्तिकप्रशंसाप्रकरणे—

"धात्रीछायां तु यः कुर्यात् पिण्डदानं महामुने !।

मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य तु ॥

धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः।

---

* मया लक्ष्म्या।

धात्रीफलकृताहारो नरो नारायणो भवेत् ॥" इति

दानमाह वामनः—

"रजतं कनकं दीपान् मणिमुक्ताफलादिकम् ।

दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः ॥" इति ।

अस्यामेव पूर्वोक्तद्विदलादिव्रतस्यारम्भः कार्य इत्युक्तं पाद्मे—

"आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।

कार्त्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः ॥" इति ।

कार्तिकशुक्लैकादशी बोधिनीत्युक्तं हेमाद्रौ तत्रैव—

"एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम् ।

प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥" इति ।

मदनरत्नेऽपि भविष्ये—

"कार्त्तिके शुक्लपक्षे तु एकादश्यां पृथासुत !

मन्त्रेणानेन राजेन्द्र ! देवमुत्थापयेद् द्विजः ॥" इति ।

अत्र यद्यपि हेमाद्रिधृतवचने रात्रौ बोधयेदित्युक्तम्, तथापि प्रबोधस्तु दिवैव कार्यः,

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।"

इति सर्वनिबन्धकारधृतमात्स्यवाक्यात् । शिष्टास्तु द्वादश्यां प्रबोधयन्ति । तद्विधिस्तु कार्त्तिकशुक्लद्वादश्यां वक्ष्यते । अस्यां भीष्मपञ्चकं कार्यम् ।

"व्रतं चैतन्महापुण्यं महापातकनाशनम् ।

अतो वरप्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् ॥

कार्त्तिकस्याऽमले पक्षे स्नात्वा सम्यग्यतव्रतः ।
एकादश्यां तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् ॥"

पाद्मे—

"पञ्चाहं पञ्चगव्याशी भीष्मायार्घ्यं च पञ्चसु ।
अहःस्वपि तथा दद्यान्मन्त्रेणानेन सुव्रत ! ॥
सत्यव्रताय शूराय शान्ताय तु महात्मने ।
भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे ॥" इति ।

अन्योऽपि विस्तरोऽत्र श्रीमातुलकृतव्रतार्के द्रष्टव्यः । अथ पौषशुक्लैकादशी मन्वादिः, "पुष्यस्यैकादशी सिता" इति वाक्यांशात् । अत्र श्राद्धं कार्यम्, "माध्यां मन्वन्तरादिषु" इति पूर्वोक्तवाक्यात् ।

तच्च नैमित्तिकम् । एकादशी प्रयुक्तोपवासस्तु नित्यः । तथा च नित्योपवासे श्राद्धप्राप्तौ ऋष्यशृङ्गः—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥" इति ।

अस्यामेव माघस्नानारम्भ उक्तो ब्राह्मे—

"एकादश्यां पौषमासे माघस्नानं समारभेत् ।
द्वादश्यां पूर्णिमायां वा शुक्लपक्षे समापनम् ॥" इति ।

'शुक्लपक्षे' माघशुक्लपक्षे । मासोपवासिनस्त्रिकालं स्नानं पूजा चोक्ता पद्मपुराणे—

"पुष्यस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः ।
मासमात्रं निराहारस्त्रिकालं स्नानमाचरेत् ॥
त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः ।
माघस्यैकादशी शुक्ला यावद्विद्याधरोत्तम ! ॥" इति ।

स्नानकालश्च श्रीसूर्योदये प्रोक्तो भविष्योत्तरे—

"यो माघमास्युषसि सूर्यकराभितप्ते
स्ना ं समाचरति चारुनदीप्रवाहे ।
उद्धृत्य सप्तपुरुषान् पितृमातृतश्च
स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥" इति ।

अरुणोदयेऽप्युक्तो ब्राह्मे—

"अरुणोदये तु सम्प्राप्ते स्नानकाले विचक्षणः ।
माधवाङ्घ्रियुगं ध्यात्वा यः स्नाति सुरपूजितः ॥" इति ।

तत्र सङ्कल्पमाह विष्णुः—

"तत्र चोत्थाय नियमं गृह्णीयाद् विधिपूर्वकम् ।
माघमासमिमं पूर्णं स्नास्येऽहं देव ! माधव !
तीर्थस्यास्य जले नित्यमिति सङ्कल्प्य चेतसि ।"

स्नानमन्त्रः पाद्मे—

"दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ।
प्रातः स्नानं करोम्यद्य माघे पापविनाशनम् ॥
मकरस्थे रवौ माघे गोविन्दाऽच्युत ! माधव ! ।
स्नानेनाऽनेन मे देव ! यथोक्तफलदो भव ॥" इति

श्रीसूर्यायार्घ्यदानमुक्तं पृथ्वीचन्द्रोदये—

"सवित्रे प्रसवित्रे च परं धाम जले मम ।

त्वत्तोजसा परिभ्रष्टं पापं यातु सहस्रधा ॥" इति ।

माघस्नानमदः प्रयागेऽतिप्रशस्तमुक्तं पद्मपुराणे—

"काश्याः शतगुणा प्रोक्ता गङ्गा यामुनसङ्गमे ।

सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी ॥

पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता ।

हन्ति कल्पकृतं पापं सा माघे नृप ! दुर्लभा" ॥ इति ।

विशेषस्त्वस्मन्मातृप्रपितामहभट्टश्रीनारायणपदपाथोजविरचितात् प्रयागसेतोरवगन्तव्यः । अत्राऽसमर्थस्त्र्यहं स्नायात्,

"अस्मिन् योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ।"

इति पद्मपुराणात् । अत्र मकरसंक्रमरथसप्तमीमाघीपौर्णमासीति दिनत्रयमिति केचित् । माघशुक्लदशम्यादीत्येके । मकराद्यत्र्यह इत्यन्ये । माघस्याऽऽद्यत्र्यह इत्यपरे । यत् किञ्चिद् दिनत्रयमिति श्रीमातुः प्रपितामहचरणाः । माघशुक्लत्रयोदश्यादीति भूरयो निबन्धकाराः । एवं षट्पक्षाः सिद्धाः ।

फाल्गुनशुक्लैकादश्यामामलकीवृक्षस्थितं विष्णुं पूजयेदित्युक्तं निर्णयामृते भविष्योत्तरे—

"फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः ।

वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः ॥

तत्र सम्पूज्य देवेशं भक्त्या कुर्यात् प्रदक्षिणम् ।" इति ।

एकादशी शुक्रेण सिद्धा। भौमेन विरुद्धा। योगिन्य-स्यामाग्नेय्यामित्येकादशी निर्णीता ॥

अथ द्वादशी निर्णीयते। सा पूर्वा कार्या,

"द्वादशी च प्रकर्त्तव्या एकादश्या युता प्रभो!।"

इति माधवीयस्कान्दात्;

'रुद्रेण द्वादशी युक्ता' इति युग्मवाक्याच्च।

पारणानिर्णये हेमाद्रौ कूर्मपुराणे—

"एकादश्यामुपोष्यैवं द्वादश्यां पारणं स्मृतम्।
त्रयोदश्यां न तत्कुर्याद् द्वादशद्वादशीक्षयात् ॥"

तत्रैव—

"कलाद्वयं त्रयं वापि द्वादशीं न त्वतिक्रमेत्।"

अतिक्रान्तायां द्वादश्यां तु सर्वं नित्यं प्रातरेव समाप्य तस्यां पारणं कुर्यात्। तदुक्तं हेमाद्रौ पाद्मे—

"यदा भवेदतीवाऽल्पा द्वादशी पारणा दिने।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा ॥" इति।

तत्रैव कात्यायनः—

"क्रमतस्तु च कृत्येषु यद्यन्तमपकृष्यते।
तदा सर्वापकर्षः स्यादन्यथा क्रमबाधनात् ॥"

माध्याह्नापकर्षस्तु सम्पूर्णायामपि द्वादश्यां कार्यम्,

"सर्वेषामुपवासानां प्रातरेव हि पारणा।"

इति पाद्मवचसा प्रातःकाले पारणाविधानात्।

प्रातःकालेऽत्राह्नः पञ्चधा विभागपक्षे ज्ञेयः। वचनं त्वलेखि प्राक्। स्वल्पायां पारणासम्भवेऽनुकल्पमाह देवलः—

"सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम्।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत्॥" इति।

सम्पूर्णायामपि द्वादश्यां श्राद्धप्राप्तावेतस्मादेव वाक्यादद्भिः पारणं कार्यमेव। यदा द्वादश्येव नास्ति तदा त्रयोदश्यां पारणमुक्तं नारदीये—

"त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम्।
शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम्॥" इति।

द्वादश्याः प्रथमपादस्य हरिवासरसंज्ञा। तद्वर्जनं चोक्तं निर्णयामृते विष्णुधर्मोत्तरे—

"द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः।
अतिक्रम्य तु कर्त्तव्यं पारणं विष्णुतत्परैः॥" इति।

विष्णुतत्परैरीश्वरभक्तैरित्यर्थः। अथ चैत्रशुक्लद्वादश्यां दमनकार्षणम्। तदुक्तमगस्त्यसंहितायाम्—

"द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः।
बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरम्॥" इति।

दमनकानयनप्रकारस्तु चैत्रशुक्लैकादश्यामुक्तः। पूर्वेद्युरानीतं दमनकं द्वादश्यां गृहीत्वेश्वराय समर्पयेत्।

तत्र मन्त्रः—

"इमं दमनकं देव ! गृहाण मदनुग्रहात् ।
इमां सांवत्सरीं पूजां भगवन् ! परिपूरय ॥" इति ।
"मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ! ।
यत्पूजितं मया देव ! परिपूर्णं तदस्तु मे ॥"

इति संप्रार्थ्य, नमस्कारान् कृत्वा, ब्राह्मणान् भोजयित्वा पारणं कुर्यात् । द्वादश्यलाभे त्रयोदश्यामपीदं कार्यमित्युक्तं तत्रैव—

"पारणाहे न लभ्येत द्वादशी घटिकापि वा ।
तदा त्रयोदशी ग्राह्या पवित्रा दमनार्पणे ॥" इति ।

इदं च दमनार्पणं नित्यम्—

"ऊर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।
चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ॥"

इति रामार्चनचन्द्रिकायामनिष्टश्रुतेः । श्रीसूर्यादिभक्तैस्तु सप्तम्यादौ दमनकार्पणं कार्यमिति तत्रैवोक्तम्—

"तत्र स्यात्स्वीयतिथिषु वह्न्यादेर्दमनार्पणम् ।" इति ।

तत्र मधावित्यर्थः । वह्न्यादयस्तु तिथिक्रमेण प्रागुक्ताः । अस्यां वामनाराधनमुक्तं निर्णयामृते वाराहपुराणे—

"सौवर्णं वामनं मासि चैत्रे सङ्कल्प्य द्वादशीम् ।
उपोष्याऽऽराधयेत्पश्चाद् देवदेवन्तु वामनम् ॥" इति ।

एकादश्यामुपोष्य द्वादश्यां सङ्कल्पपूर्वकं सौवर्णं वामनं पूजयेदित्यर्थः । वैशाखशुक्लद्वादश्यां योगविशेष उक्तो ज्योतिःशास्त्रे—

"पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥"

'पञ्चाननः' सिंहः । 'पाशाभिधाना' द्वादशी । 'करभो' हस्तम् ।
अत्रैव श्राद्धमुक्तं प्राक् । ज्येष्ठशुक्लद्वादश्यां वटसावित्रीव्रतारम्भ
उक्तो भविष्ये—

"ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिरा भवेत् ॥" इति ।

अत्र पूर्णिमानुरोधेन यथा त्रिरात्रं भवति तथा द्वादश्यां त्रयोदश्यां
वा आरम्भः कार्यः । इयमेव रामद्वादशी । अत्र रामपूजोक्ता
निर्णयामृते वाराहपुराणे—

"ज्येष्ठे मासेऽप्येवमेव सङ्कल्प्य विधिना नरः ।
नमो रामाभिरामाय पादौ पूर्वं समर्चयेद् ॥" इति ।

आषाढशुक्लद्वादश्यां तप्तमुद्राधारणमुक्तं भविष्ये—

"शयन्यां चैव बोधिन्यां चक्रतीर्थे तथैव च ।
शङ्खचक्रविधानेन वह्निपूतो भवेन्नरः ॥" इति ।

अन्यत्रापि—

"तद्विष्णोः परमं पदं ये गच्छन्ति हि लाञ्छिताः" । इति ।

अत्र शूद्रस्याधिकारो न ब्राह्मणादेः । तदुक्तं नारदीये—

"शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद् बहिः कार्यः सर्वस्माद् द्विजकर्मणः ॥" इति ।

शैवपुराणेऽपि—

"शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ॥" इति ।

आश्वलायनः—

"शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विजः ।
न धारयेत्तु मतिमान् वैदिके वर्त्मनि स्थितः ॥
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥"

श्रावणशुक्लद्वादश्यां देवे पवित्रारोपणं कार्यम् । तदुक्तं हेमाद्रौ विष्णुरहस्ये—

"श्रावणे ह्यसिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥" इति ।

कुलधर्मानुरोधेनाप्युक्तं निर्णयामृते मात्स्ये—

"आषाढ्यामथवा षष्ठ्यां चतुर्दश्यामुमापतिम् ।
पवित्रैरर्चयेद् भाद्र्यां श्रावण्यां च विशेषतः ॥" इति ।

अत्र सर्वेषामप्यधिकार उक्तो विष्णुरहस्ये—

"ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च ।
स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकम् ॥
पवित्रारोपणं काले न करोति कथंचन ।
तदाऽयुतं जपेन्मन्त्रं स्तोत्रं वापि समाहितः ॥"

इति रामार्चनचन्द्रिकायां प्रायश्चित्तश्रवणान्नित्यमिदम् ।

"न करोति विधानेन पवित्रारोपणं तु यः ।
तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ! ॥"

इति विष्णुरहस्येऽनिष्टश्रवणाच्च । पवित्रार्पणविधिर्भविष्ये—

"सोपवासः शुचिः प्रातः कृतजाप्यो जितेन्द्रियः ।
दत्वा दानं द्विजाग्र्येभ्यः पूजयित्वा जनार्दनम् ॥
पूर्वाधिवासितं सम्यक् समादाय पवित्रकम् ।"

पवित्राधिवासनं तु श्रावणशुक्लैकादश्यामुक्तम्—

"अतो देवेति मन्त्रेण विष्णोर्मूर्ध्नि निवेदयेत् ।
सूक्तस्य मूलमन्त्रो वा येन वै पूजयेद्धरिम् ॥"

येन वेत्यनेन नाममन्त्र उक्तः । प्रार्थना तत्रैव—

"मणिविद्रुममालाभिर्मन्दिरं कुसुमादिभिः ।
एषा सांवत्सरी पूजा तवाऽस्तु गरुडध्वज ! ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽहमिति मां मत्वा क्षमस्व मधुसूदन ! ॥
ततः पवित्रं गुरवे दद्याद् गन्धादिपूर्वकम् ।
ब्राह्मणान् वैष्णवांश्चैव गन्धपुष्पादिनाऽर्चयेत् ॥
पक्षं द्विमासं सद्यो वा त्रिरात्रं पञ्च वा नव ।

स्थाप्यमिति शेषः ।

सांवत्सरीं शुभां पूजां संपाद्य विधिवन्नमः ।
व्रजेदानीं पवित्र ! त्वं विष्णुलोकं विसर्जितम् ॥

मन्त्रेणानेन तत्सूत्रमवतार्य यथाविधि ।
उत्तार्य ब्राह्मणे दद्यात्तोये वाऽथ विसर्जयेत् ॥
अनेनैव विधानेन सर्वेषां त्रिदिवौकसाम् ।
पवित्रारोपणं कुर्यान्मूर्तौ वा स्थण्डिलेऽपि वा ॥
तत्तन्मन्त्रैः समावेशो विसर्जनविधिक्रियाः ।" इति दिक् ।

भाद्रशुक्लद्वादशी वामनजयन्ती, तस्यां वामनावतारात् । तदुक्तं श्रीभागवतेऽष्टमस्कन्धेऽष्टादशाध्यायारम्भे—

"श्रोणायां श्रवणद्वादश्यां* मुहूर्तेऽभिजिति प्रभुः ।
ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥
द्वादश्यां सविता तिष्ठन्मध्यंदिनगतो नृप ! ।
विजया नाम सा प्रोक्ता तस्यां जन्म विदुर्हरेः ॥"

व्रतहेमाद्रौ पक्षान्तरमुक्तम्—

"अथ काले बहुतिथे गते सा गुर्विणी भवेत् ।
सुषुवे नवमे मासि पुत्रं सा वामनं हरिम् ॥
एतत्सर्वं समभवदेकादश्यां युधिष्ठिर ! ।
तेनेष्टा देवदेवस्य सर्वथा विजया तिथिः ॥" इति ।

अत्र कल्पभेदेन व्यवस्था। सम्प्रति श्रीभागवतपक्ष एवाद्रियते शिष्टैः । इयं मध्याह्ने वामनप्रादुर्भावान्मध्याह्नव्यापिनी ग्राह्या । दिनद्वये मध्याह्नव्याप्तावव्याप्तौ वा पूर्वा, पूर्वोक्त-स्कान्दवचनात् । तत्र विधिर्व्रतहेमाद्रावग्निपुराणे—

* 'भाद्रद्वादश्याम्' इति पाठान्तरम् ।

"नदीनां सङ्गमे स्नायादर्चयेदत्र वामनम् ।
सौवर्णं वस्त्रसंयुक्तं द्वादशाङ्गुलमुच्छ्रितम् ॥"

इति तं सम्पूज्य सौवर्णपात्रेणार्घ्यं दद्यात् ।

तत्र मन्त्रः—

"नमस्ते पद्मनाभाय नमस्ते जलशायिने ।
तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे ॥"

एवं कृत्वा परदिने प्रतिमां विप्राय दद्यात् ।

दानमन्त्रः—

"वामनः प्रतिगृह्णाति वामनोऽहं ददामि ते ।
वामनं सर्वतो भद्रं द्विजाय प्रतिपादये ॥" इति ।

इयमेव श्रवणयुक्ता श्रवणद्वादशी । अत्रोपोषणं कार्यम्,

"द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ।
निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी ॥"

इति हेमाद्रिधृतनारदपुराणात् । एषा च द्वादशी श्रवणयोगमात्रेण सर्वापि पुण्यतमा भवति । तदुक्तं मात्स्ये—

"द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः ।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ॥" इति ।

श्रवणस्पृष्टेयं द्वादशी एकादशीं स्पृशेच्चेद् विष्णुशृङ्खला । तत्रोपवासे महत् फलम् । तदुक्तं हेमाद्रौ मत्स्यपुराणे—

"द्वादशी श्रवणास्पृष्टा स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥

तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥" इति ।

श्रवणास्पृष्टा श्रवणेन युक्तेत्यर्थः । अस्मिन्नेव वचने श्रवणशब्दस्य स्त्रीलिङ्गेऽपि दर्शनात् । निर्णयामृतकारस्तु—

"द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसञ्ज्ञितः ॥"

एवमिदं वचो लिलेख । तेन तन्मते श्रवणस्यैकादशीद्वादशीभ्यां सह योग एव विष्णुशृङ्खलमन्यथा नेति । हेमाद्रिमते तु—एकादश्याः श्रवणयोगाभावेऽपि तद्युक्तद्वादशीमात्रयोगे विष्णुशृङ्खलमिति भेदः । यदैकादश्येव श्रवणान्विता तदैकेनैवोपवासेन द्वयोः सिद्धिः । तदेतदभिप्रेत्योक्तं हेमाद्रौ नारदीये—

"यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥
उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः ।
विभेदोऽपि न कर्त्तव्यो विभेदात्पतते नरः ॥" इति ।

अनुष्ठितैकादशीव्रतः सन् परदिने यस्तूपवासासमर्थः स तु पूजामात्रं कुर्यात् । तथा च मात्स्ये—

"द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥"

इति हरिपूजामेव कुर्वीत, न तूपवासमित्यर्थः । उपवासकरणे तदङ्गहरिपूजायाः प्राप्तत्वादेव पुनस्तद्विधिवैयर्थ्यात् । यस्तूप-

वासासमर्थोऽस्वीकृतैकादशीव्रतश्च स 'काम्यं नित्यस्य बाधकम्' इति न्यायेन द्वादश्युपोषणमेव कुर्यात् । तदुक्तं नारदीये—

"उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् ।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥" इति ।

यस्तूपवासद्वयसमर्थस्तं प्रति भविष्योत्तरे—

"एकादश्यामुपोष्यैव द्वादश्यामप्युपोषयेत् ।
न चाऽत्र विधिलोपः स्यादुभयोर्दैवतं हरिः॥" इति ।

विधिलोपः पारणाविधिलोपः । अत्र कृत्यं मदनरत्ने विष्णुधर्मोत्तरे—

"या राम ! श्रवणोपेता द्वादशी महती तु सा ।
तस्मिन् दिने तथा स्नानं यत्र क्वचन संगमे ॥

कार्यमिति शेषः ।

दध्योदनयुतं तस्यां जलपूर्णं घटं द्विज ! ।
वस्त्रसंवेष्टितं दत्वा गतिमग्र्यां च विन्दति ॥
प्राप्नोत्ययत्नाद् धर्मज्ञ ! द्वादशद्वादशीफलम् ।" इति ।

घटदाने मन्त्रः—

"नमो नमस्ते गोविन्द ! बुधश्रवणसंज्ञक ! ।
अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥
प्रीयतां देवदेवेशो मम संशयनाशनः ।" इति ।

इयं बुधान्विता प्रशस्तेत्युक्तं हेमाद्रौ—

"बुधश्रवणसंयुक्ता सैव च द्वादशी भवेत् ।
अत्यन्तमहती सा स्याद् दत्तं भवति चाऽक्षयम् ॥" इति ।

पारणमन्यतरान्ते कार्यम् । तदुक्तं हेमाद्रौ नारदीये—

"तिथिनक्षत्रयोर्योगे उपवासो यदा भवेत् ।
पारणं तु न कर्त्तव्यं यावन्नैकस्य संक्षयः ॥" इति ।

अयमन्यतरान्तपारणापक्षो गौणो न तु मुख्यः,

"याः काश्चित्तिथयः प्रोक्ताः पुण्यनक्षत्रयोगतः ।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम् ॥"

इति वचने श्रवणरोहिण्योः पर्य्युदासाश्रयणात् । तस्मादुभयान्ते पारणमिति मुख्यः कल्पः ।

इहैव प्रसङ्गादितरमहाद्वादशीनामानि ब्रह्मवैवर्त्ते—

"उन्मीलनी वञ्जुला च त्रिस्पृशा पक्षवर्द्धिनी ।
जया च विजया चैव जयन्ती पापनाशिनी ॥
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विजाः ! ॥" इति ।

एतासां लक्षणादिकं प्रचुरप्रचाराभावान्नोक्तमिति संक्षेपः । आश्विनकृष्णद्वादश्यां संन्यासिनां महालयश्राद्धमुक्तं वायुपुराणे—

"संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद् यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु ॥" इति ।

आश्विनशुक्लद्वादश्यां पद्मनाभपूजोक्ता निर्णयामृते वाराहपुराणे-

"सम्यगाश्वयुजे मासि द्वादश्यां शुक्लपक्षके ।
सङ्कल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम् ॥" इति ।

कार्त्तिककृष्णद्वादश्यां गोवत्सद्वादशीव्रतम् । तदुक्तं मदनरत्ने भविष्ये—

"सम्प्राप्ते कार्त्तिके मासि कृष्णपक्षे कुरूत्तम ! ।
महापुण्यव्रतं स्त्रीणां गोवत्सद्वादशीव्रतम् ॥"

व्रतविधिस्तत्रैव—

"द्वादश्यां कृतसङ्कल्पः स्नात्वा पुण्ये जलाशये ।
नरो वा यदि वा नारी नक्तं सङ्कल्प्य चेतसि ॥
ततो मध्याह्नसमये कृत्वा देवार्चनादिकम् ।
प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः ॥
सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् ।
चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः ।
पादमूले तु दद्याद्वै मन्त्रेणाऽनेन पाण्डव ! ॥
क्षीरोदार्णवसम्भूते ! सुरासुरनमस्कृते ! ।
सर्वदेवमये ! मातर्गृहाणार्घ्यं नमो नमः ॥
दत्वार्घ्यं साक्षतं पुण्यं तज्जलं मूर्ध्नि निक्षिपेत् ।
ततो माषादिसंसिद्धान् वटकान् विनिवेदयेत् ॥
पञ्च सप्त दशैकं वा यथाविभवमात्मनः ।" इति ।

गोग्रासे मन्त्रौ—

"सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
सुरभि ! त्वं जगन्मातर्देवि ! विष्णुपदे स्थिता ।
सर्वदेवमये ! ग्रासं मया दत्तमिमं ग्रस ॥" इति ।

प्रार्थना—

"प्रार्थयेच्चाशिषः सम्यक् बध्वाग्रे करसम्पुटम् ।
सर्ववेदमये ! देवि ! सर्वदेवैरलंकृते ! ॥
मातर्ममाभिलषितं सफलं कुरु नन्दिनि ! ।" इति ।

अत्र वर्ज्यं तत्रैव—

"तद्दिने तापिकापक्वं स्थालीपक्वं युधिष्ठिर ! ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् ॥" इति ।

'तापिका' रोटिकाभर्जनपात्रम् ।

भक्ष्यं तत्रैव—

"माषान्नं कामतोऽश्नीयाद्रात्रौ विगतमत्सरः ।" इति ।

इयं सायाह्नव्यापिनी ग्राह्या, गवागमनप्रतीक्षोक्तेः । दिनद्वये चेत्पूर्वा,

"वत्सपूजा वटश्चैव कर्तव्या प्रथमेऽहनि ।"

इति स्मृत्यन्तरात् । अत्र कार्तिकः कृष्णप्रतिपदादिर्गृह्यते, शिष्टाचारात् ।

अथ द्वादशीमारभ्य पञ्चसु दिनेषु नीराजनाविधिरुक्तो नारदीये—

"आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिषूक्तः पूर्वरात्रौ नृणां नीराजनाविधिः ॥
नीराजयेयुर्देवांस्तु विप्रान् गाश्च तुरङ्गमान् ।
ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमुख्यांश्च योषितः ॥" इति ।

अत्राश्विनोऽमान्तः । यमोद्देशेन सन्ध्याकाले वहिर्दीपदानमुक्तं स्कान्दे । तत्र मन्त्रः—

"मृत्युना पाशदण्डाभ्यां कालेनामलया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां नमः ॥" इति ।

कार्त्तिकशुक्लद्वादश्यां देवोत्थापनमुक्तं रामार्चनचन्द्रिकायाम्—

"पारणाहे पूर्वरात्रौ घण्टादीन्वादयेन्मुहुः ।
विधाय महतीं पूजां विष्णुमभ्यर्च्य वैष्णवान् ॥" इति ।

उत्थापनविधिस्तत्रैव—

"इदं विष्णुरनेनाशु तल्पादुत्थापयेत्प्रभुम् ।"

पौराणमन्त्रः—

"ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित ! वन्दनीय !
बुध्यस्व देवेश ! जगन्निवास ! समं प्रभावेण सुखेन देव ॥
इयं तु द्वादशी देवप्रबोधार्थं विनिर्मिता ।
त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥

उत्तिष्ठोत्तिष्ठ गोविन्द ! त्यज निद्रां जगत्पते ! ।
त्वयि सुप्ते जगन्नाथ ! जगत् सुप्तं भवेदिदम् ॥
विबुद्धे च विबुद्ध्येत प्रसन्नो मे भवाऽच्युत ! ।
उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ! ॥
गता मेघा वियच्चैव निर्मलं निर्मला दिशः ।
शारदानि च पुष्पाणि गृहाण मम केशव ! ॥"

इदं देवोत्थापनमिदानीन्तना रामार्चनचन्द्रिकात एव द्वादश्यां कुर्वन्ति । वस्तुतस्तु तत्र श्रीरामोत्थापनमेव युक्तम्, राघवादि-शब्दग्रहणात् । इतरेषां क्रतुभुजामेकादश्यामेव पूर्वोक्तवचना-दिति । तच्च प्रभाते कार्यम्,

"रात्रौ जागरणं कुर्यादेकादश्यां सुरालये ।
प्रभाते विमले स्नात्वा देवमुत्थापयेत्सुधीः ॥"

इति भविष्यत्पुराणात् । ततो देवाग्रे चातुर्मास्यव्रतसमाप्तिः कार्य्या,

"चतुर्द्धा गृह्य वै चीर्णं चातुर्मास्यं व्रतं नरैः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥"

इति भारते उक्तत्वात् ।

तत्र मन्त्रः—

"इदं व्रतं मया देव ! कृतं प्रीत्यै तव प्रभो ! ।
न्यूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्दन ! ॥" इति ।

ततो ब्राह्मणेभ्यो नियमं कथयित्वा सदक्षिणं तद् द्रव्यं दत्वा पारणं कुर्यात् । तदुक्तं ब्राह्मे—

"चतुरो वार्षिकान् मासान् नियमं यस्य यत्कृतम् ।
कथयित्वा द्विजेभ्यस्तद्द्याद्भक्त्या सदक्षिणम् ॥
एवं विसर्जयेद् विप्रं ततो भुञ्जीत तत्स्वयम् ।" इति ।

इयं मन्वादिः, "कार्त्तिके द्वादशी तथा" इति वाक्यात् । माघ-शुक्लद्वादशी तिलद्वादशी । तदुक्तं ब्रह्मपुराणे—

"माघे तु शुक्लद्वादश्यां यमो हि भगवान् पुरा ।
तिलानुत्पादयामास तपः कृत्वा सुदारुणम् ॥
राजा दशरथो भूतस्तस्यां तानवतारयत् ।
तिलानामाधिपत्ये तु विष्णुस्तत्र सुरैः कृतः ॥
तस्यामुपोषितः स्नात्वा तिलैः सम्यग् यजेद्धरिम् ।
तिलतैलेन दीपाश्च देया देवगृहेषु च ॥
निवेदयेत् तिलानेव होतव्याश्च तथा तिलाः ।
तिलान् दत्वा तु विप्रेभ्यो भक्षयेच्च तथा तिलान् ॥"इति ।

अथ सर्वासु द्वादशीषु व्रतसमर्पणं कृत्वा पारणं कुर्यादित्युक्तं कात्यायनेन—

"प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
पारणं तु ततः कुर्याद् यथासम्भवमार्गतः ॥" इति ।

समर्पणे मन्त्रस्तत्रैव—

"अज्ञानतिमिरान्धस्य व्रतेनानेन केशव !
प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव ॥" इति ।

अपरार्केऽपि—

"अज्ञानान्धेन यत्किञ्चिद् मया खण्डं व्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥
यथाखण्डं जगत्सर्वं त्वमेव पुरुषोत्तमः ।
तथा खण्डमखण्डं मे व्रतं भवतु केशव ! ॥" इति ।

यथासम्भवमागतान् ब्राह्मणान् यथाशक्ति भोजयित्वेष्टैः सह नारायणस्मरणपूर्वकं भोजनं कुर्यादित्यर्थः । तथैव नारदीये द्वादशीप्रकरणे—

"ब्राह्मणान् भोजयेच्छक्त्या प्रदद्याद्दक्षिणां तथा ।
ततः स्वबन्धुभिः सार्द्धं नारायणपरायणः ॥
कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः ।" इति ।

पारणाहे विशेषः स्कान्दे—

"कृत्वा चैत्रोपवासं तु योऽश्नीयाद् द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥" इति ।

हेमाद्रौ विष्णुरहस्ये—

"परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥" इति ।

अत्र वर्ज्यान्युक्तानि ब्रह्माण्डे—

"कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च प्रवासं च दिवास्वापमथाञ्जनम् ॥
तित(ल)पिष्टं ( ? ) मसूरं च द्वादशैतानि वैष्णवः ।

द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥" इति।

बृहस्पतिरपि—

"दिवानिशं परान्नं च पुनर्भोजनमैथुने।
क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्ट वर्जयेत् ॥" इति।

कांस्यं भोजनपात्रम्। आमिषाणि चोक्तानि रामार्चनचन्द्रिकायां पाद्मे—

"प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम्।
अयज्ञशिष्टं मांसादि यद्विष्णोरनिवेदितम् ॥
दग्धमन्नं मसूरश्च मांसं चेत्यष्टधाऽऽमिषम्।"

तथा—

"गोछागमहिषीदुग्धादन्यदुग्धादि चामिषम् ॥
धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा।
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम्।
आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः ॥" इति।

ताम्रपात्रस्थमैक्षवमपि निषिद्धम्,

"ऐक्षवं ताम्रपात्रस्थं गोमांससदृशं मुने!।"

इति ब्रह्मवैवर्तवचनात्। द्वादशी बुधवारेण सिद्धा। रविवारेण क्रकचाख्या विरुद्धा। योगिन्यत्र नैरृत्याम्। इति द्वादशी निर्णीता ॥

अथ त्रयोदशी निर्णीयते—

सा शुक्ला पूर्वा, कृष्णोत्तरा। तदुक्तं माधवेन—

"शुक्ला त्रयोदशी पूर्वा परा कृष्णात्रयोदशी।" इति।

दीपिकायामपि—

"त्रयोदशी तिथिः पूर्वा सितेऽथासिते पश्चात्" इति।

उपवासेऽप्ययमेव निर्णयः। शिवपूजानक्तभोजनात्मकप्रदोषव्रते तु प्रदोषव्यापिनी ग्राह्या,

"पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा।
घटिकाभिरस्तमयात्पूर्वं स्नानं समाचरेत्॥
शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः।
कृतसन्ध्याजपविधिः शिवपूजां समारभेत्॥"

इति ब्रह्मोत्तरखण्डे तत्रैव पूजाविधानात्;

"ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती।
पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत्॥"

इति स्कान्दाच्च। प्रदोषश्च—

"प्रदोषस्त्रिमुहूर्तः स्याद्भानावस्तं गते सति।"

इत्युक्तो बोध्यः। दिनद्वये प्रदोषव्याप्तौ परैव,

"यदि स्यादुभयोस्तिथ्योः प्रदोषव्यापिनी तिथिः।
तदोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः॥" इति।

हेमाद्रिधृतजाबालिवाक्यात्। 'उभयत्र' दिवा रात्रावपीत्यर्थः। दिनद्वये प्रदोषाभावेऽपि परैव—

"अतथात्वे परत्र स्यात्तत्रार्वागस्ततो दिवा ।"

इति वाक्यात् । 'अतथात्वे' दिनद्वये प्रदोषकाले तिथेरभावे । पक्षप्रदोषव्रते वारभेदेन फलभेदोऽप्युक्तः स्कन्दपुराणे—

"यदा त्रयोदशी शुद्धा मन्दवारेण संयुता ।
आरब्धव्यं व्रतं तत्र सन्तानफलसिद्धये ॥
ऋणनिर्मोचनार्थे तु भौमवारेण संयुता ।
सौभाग्यस्त्रीविवृद्ध्यर्थं शुक्रवारेण संयुता ॥
आयुरारोग्यसिद्ध्यर्थं भानुवारेण संयुता ।" इति ।

इदं प्रदोषव्रतं मन्दवारे प्रशस्तम्, कृष्णपक्षे मन्दे त्वतिप्रशस्तम् । तदुक्तं ब्रह्मोत्तरखण्डे—

"मन्दवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम् ।
तत्रापि दुर्लभस्तस्मिन् कृष्णपक्षे समागतः ॥" इति ।

अध्ययनप्रदोषमाह कालादर्शे बृहन्मनुः—

"चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्द्धरात्रतः ।
अर्वाङ्नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणम् ॥"

अस्यार्थः—चतुर्थ्यादितिथीनामर्द्धरात्रादर्वाक् सत्त्वेऽर्द्धरात्रं यावत्प्रदोष इति । दिनद्वयेऽपि तथात्वे दिनद्वयं प्रदोषः । स्मृत्यर्थसारमते चतुर्थ्यां विशेषः—

"चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने ।
नाध्यायं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥
अर्द्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके ॥" इति ।

अथ चैत्रशुक्लत्रयोदश्यनङ्गत्रयोदशी। अस्यामनङ्गपूजोक्ता निर्णयामृते कूर्मपुराणे—

"मधौ शुक्लत्रयोदश्यां मदनं चन्दनात्मकम्।
कृत्वा संपूज्य यत्नेन वीजयेद् व्यजनेन च॥
ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः।" इति।

हेमाद्रौ भविष्येऽपि—

"चैत्रोत्सवे सकललोकमनोनिवासे
कामं त्रयोदशतिथौ च वसन्तयुक्तम्।
पत्न्या सहार्च्य पुरुषप्रवरोऽथ योषि-
त्सौभाग्यरूपसुतसौख्ययुतः सदा स्यात्॥"

वैशाखशुक्लत्रयोदश्यां वैशाखस्नानारम्भः कार्य इत्युक्तं पद्म-पुराणे—

"त्रयोदश्यां चतुर्दश्यां वैशाख्यां च दिनत्रयम्।
अपि सम्यग् विधानेन नारी वा पुरुषोऽपि वा॥
प्रातः स्नातः सनियमः सर्वपापैः प्रमुच्यते। इति।"

स्नानविधिस्तु चैत्रशुक्लैकादश्यामुक्तः। इदं च सम्पूर्णवैशाखस्नानाशक्तौ ज्ञेयम्। भाद्रकृष्णत्रयोदशी युगादिरित्युक्तं प्राक्। भाद्रोऽत्रामान्तो ज्ञेयः, चान्द्रमासस्य मुख्यत्वात्। भाद्रशुक्लत्रयोदश्यां गोत्रिरात्रव्रतं कार्यम्,

"मासि भाद्रपदे शुक्ले त्रयोदश्यां समारभेत्।"

इति हेमाद्रौ भविष्योत्तरवचनात्। अत्र त्रयोदश्यनुरोधेन निर्णय-

स्त्रिरात्रस्य। इयं च त्रयोदशी प्रातःकालवर्तिनी ग्राह्या। दिनद्वये चेत्पूर्वा, सम्पूर्णत्वात्। कार्त्तिककृष्णत्रयोदश्यां सन्ध्यायामपमृत्युनाशार्थं दीपदानं कार्यम्,

"कार्त्तिकस्य सिते पक्षे त्रयोदश्यां निशामुखे।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति॥"

इति चन्द्रप्रकाशे उक्तत्वात्। बहिर्गृहाद्बहिः। दीपदाने प्रदोषवर्तिनी ग्राह्या, 'त्रयोदश्यां निशामुखे' इत्युक्तेः। निशामुखं प्रदोषः।'प्रदोषो रजनीमुखम्' इत्यमरः। अत्र प्रदोषः—'प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते' इत्युक्तलक्षणो ज्ञेयः। घटिकाद्वयस्य मुखावधिसमर्पकत्वात्। दिनद्वये तत्र चेत्परा। दिनद्वये तत्राभावे पूर्वा। दीपदाने मन्त्रः—

"मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह।
त्रयोदशीदीपदानात् सूर्यजः प्रीयतां मम॥" इति।

अत्र कार्त्तिकः पूर्णिमान्तो ग्राह्यः, तथैवाचारात्। कार्त्तिकशुक्लत्रयोदश्यादिदिनत्रये काश्यां पञ्चनदे स्नाताः पुण्यभाजो भवन्तीत्युक्तं काशीखण्डे—

"वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्त्तिके।
अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः॥" इति।

अत्र केचिद् यत्किञ्चिद्दिनत्रयमिच्छन्ति। वहवस्त्विदमेव त्रयोदश्यादिदिनत्रयमाहुः। माघशुक्लत्रयोदश्यादिदिनत्रये माघस्नानं कार्यम्,

"अस्मिन् योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ॥"

इति पाद्मात् । चैत्रकृष्णत्रयोदशी योगविशेषेणाऽतिप्रशस्तेत्युक्तं स्कान्दे—

"वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी ।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
शुभयोगसमायुक्ता शनौ शतभिषा यदि ॥
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ।" इति ।

अत्र चैत्रः कृष्णप्रतिपदादिर्ग्राह्यः, तत्रैव शतभिषायोगसंभवात् । अत्र कृत्यं कल्पतरौ ब्रह्माण्डे—

"चैत्रकृष्णत्रयोदश्यां शनौ शतभिषा यदि ।
वारुणीति समाख्याता शुभेन महती स्मृता ॥
पद्ममष्टदलं कृत्वा तण्डुलैर्द्रोणसम्मितैः ।
सौवर्णं राजतं ताम्रं मृण्मयं वा घटं शुभम् ॥
सितवस्त्रेण संवेष्ट्य वारिपूर्णं सपल्लवम् ।
पद्मस्य कर्णिकायां तु स्थापयेन्मन्त्रतः क्रमात् ॥
तन्मध्ये स्थापयेद्देवं वरुणं हेमनिर्मितम् ।
पलेन वा तदर्द्धेन तदर्द्धेनापि शक्तितः ॥
उपचारैः षोडशभिः पूजयित्वा यथाविधि ।
कलशं मूर्तिसंयुक्तं ब्राह्मणाय प्रदापयेत् ॥

आयुरारोग्यमैश्वर्यं धनं च लभते ध्रुवम् ।
सर्वपापैर्विनिर्मुक्तो यथेष्टां प्राप्नुयाद् गतिम् ॥" इति ।

अयं योगो गौडेष्वतिप्रसिद्धः । त्रयोदशी भौमेन सिद्धा । सोमेन विरुद्धा । योगिन्यस्यां दक्षिणस्यामिति त्रयोदशी निर्णीता ॥

अथ चतुर्दशी निर्णीयते । सा शुक्लेतरा ।
तदुक्तं नारदीये—

"तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्याः कर्त्तव्याः परसंयुताः ॥" इति ।

कृष्णा पूर्वा,

"कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा प्रकर्त्तव्या परविद्धा न कर्हिचित् ॥"

इत्यापस्तम्बोक्तेः । उपवासे तु शुक्ला कृष्णापि परयुतैव ग्राह्या,

"एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥"

इति मदनरत्ने वृद्धवसिष्ठोक्तेः । यत्तु 'कृष्णपक्षेऽष्टमी चैव' इति वचने कृष्णचतुर्दश्या उपवासे पूर्वविद्धात्वमुक्तम्, तद् रुद्रोपवासविषयम्,

"रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ।"

इति पूर्वमुक्तत्वात् । रुद्रव्रतं स्कन्दपुराणे दर्शितम्—

"चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो ! ।
मम भक्तैर्महाबाहो ! भवेद्या चापराह्णिकी ॥" इति ।

अत्र मम भक्तैरितीश्वरोक्तिलिङ्गादस्य रुद्रव्रतसम्बन्धिचतुर्दशी-विषयत्वं विज्ञायते। चैत्रशुक्लचतुर्दशी रात्रिव्यापिनी कार्या,

"मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी॥"

इति बौधायनवाक्यात्। परा अन्या अन्यमासगता शुक्लचतुर्दशी पूर्वाह्णगामिन्युत्तरविद्धेत्यनुवादः। श्रीमातामहास्तु रात्रिव्यापिनी-त्येतत्पूर्वविद्धापरमित्यूचुः। तत्र स्पष्टार्थत्वाद्रात्रावेव पशुपतीश्व-रपूजाविधानाच्च पूर्वमतमेव युक्तमाभाति। अस्यां काममहोत्सव उक्तो हेमाद्रौ देवीपुराणे—

"चैत्रे सितचतुर्दश्यां भवेत्काममहोत्सवः।
जुगुप्सितोक्तिभिस्तत्र गीतवस्त्रादिभिर्नृणाम्॥
भगवांस्तुष्यते कामः पुत्रपौत्रसमृद्धिदः।" इति।

इयमेव पशुपतीश्वरपूजने रात्रिव्यापिनी ग्राह्या,

"चैत्रशुक्लचतुर्दश्यामुपोषणपरायणः।
पूजयित्वा पशुपतिं रात्रौ जागरणं तथा॥
निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः।
अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत्॥"

इति ब्रह्मवैवर्त्तात्।

वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती। तदुक्तं गोविन्दार्णवे ब्राह्मे—

"शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञके।
प्रादुर्भूतो नृपञ्चास्यस्तस्मात्तां समुपोषयेत् ॥" इति।

'नृपञ्चास्यो' नृसिंहः। इयं प्रदोषव्यापिनी ग्राह्या,

"वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके।
अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ॥"

इति स्कान्दात्;

"वैशाखशुक्लपक्षस्य चतुर्दश्यां विवस्वति।
अस्तंगामिनि सर्वेषां पुरः स्तम्भस्य मध्यतः॥
प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृप!।
राधशुक्लचतुर्दश्यां शुद्धे वणिजवायुभे॥
मन्दवारे नृसिंहोऽभूत् त्रेतायां चादिकल्पके।
सायंकाले सदसतां रक्षादमनकारणात् ॥"

इति नृसिंहभविष्यपुराणाच्च।

अत्राऽस्मन्मातुः पितामहचरणाः—

नृसिंहपुराणे सामान्यतः काल उत्पत्तेरुक्तः, विवस्वत्यस्तंगामिनीति घटिकापरिमाणानुक्तेः। तस्य स्कान्देन निर्णयः। तत्र हि प्रदोष उपात्तः। तल्लक्षणं च हेमाद्रावुक्तम्—

"त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तं गते सति।" इति।

तस्यापि सङ्कोचो भविष्यपुराणेन तत्र सायंकाल इत्युक्तेः।

"नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम्।" इति।

अत्र यद्यपि सायंशब्देन परोऽवधिर्न लभ्यते, तथापि प्रदोषशब्देन

परावधिलाभात् सायंशब्देन च पूर्वावधिलाभात् त्रिघटिकात्मक-सायंसन्ध्योर्ध्वघटिकात्रयं प्रदोषसायंशब्दाभ्यां परस्परं विशेषणा-ल्लभ्यते जन्मकालत्वेनेति तत्कालव्यापिनी नृसिंहचतुर्दश्युपोष्येति राद्धान्तमाहुः—

"अयं प्रकामं प्रियदर्शनत्वाद्
विनिर्णयो मे रुचये बभूव ।
निशीथिनीनाथ इवोदितोऽसौ
प्रभाकरः पूर्णकलो नलिन्याः ॥" इति ।

दिनद्वये तद्व्याप्तिसत्त्वेऽसत्त्वे वैकदेशसमव्याप्तौ चोत्तरा, व्रतारम्भ-काले सत्त्वात् । व्रतारम्भकालस्तु तत्रैवोक्तः—

"ततो मध्याह्नवेलायां नद्यादौ विमले जले ।
परिधाय नवं वासो व्रतकर्म समारभेत् ॥" इति ।

"अनङ्गेन समायुक्ता न सोपाष्या चतुर्दशी ।
धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ॥"

इति पाद्मे त्रयोदशीयुक्तनिषेधाच्चापरैव । वैषम्येणैकदेशस्पर्शे तदाधिक्यवती ग्राह्या । अत्र सर्वेषामधिकार इत्युक्तं तत्रैव—

"सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते ।
मद्भक्तैस्तु विशेषेण कर्त्तव्यं मत्परायणैः ॥" इति ।

अथ व्रतग्रहणप्रकारस्तत्रैव—

"नृसिंह ! देवदेवस्य तव जन्मदिने शुभे ।
उपवासं करिष्यामि सर्वभोगविवर्जितः ॥"

इति संकल्पं मध्याह्ने कृत्वा, परदिने स्नात्वा, पुनर्देवं सम्पूज्य प्रार्थयेत्—

"नृसिंहाच्युत ! देवेश ! लक्ष्मीकान्त ! जगत्पते !
अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः ॥
मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे ।
ताँस्त्वमुद्धर देवेश ! दुःसहाद्भवसागरात् ॥
श्रीनृसिंह ! रमाकान्त ! भक्तानां भयनाशन ! ।
क्षीराम्बुनिधिवासी त्वं चक्रपाणे ! जनार्दन ! ॥
व्रतेनानेन देवेश ! भुक्तिमुक्तिप्रदो भव ।" इति ।

ततस्तां प्रतिमां ब्राह्मणाय दद्यात् । योगविशेषेणैकं प्रशस्तेत्युक्तं तत्रैव—

"स्वातिनक्षत्रसंयोगे शनिवारे च मद्व्रतम् ।
सिद्धियोगस्य संयोगे वणिजे करणे तथा ॥
पुंसा सौभाग्ययोगेन लभ्यते दैवयोगतः ।" इति ।

इदं नित्यव्रतम्,

"विज्ञाय मद्दिनं यस्तु लङ्घयेत्पापकृन्नरः ।
स याति नरके घोरे यावच्चन्द्रदिवाकरौ ॥"

इत्यनिष्टश्रुतेः ।

श्रावणशुक्लचतुर्दशी रात्रिव्यापिनी ग्राह्येत्युक्तं प्राक् ।

भाद्रशुक्लचतुर्दश्यामनन्तव्रतमुक्तं भविष्ये—

"तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तमः ।
पौर्णमास्याः समायोगे व्रतं चानन्तयं चरेत् ॥" इति ।

अत्रोदयव्यापिनी ग्राह्या,

"उदये त्रिमुहूर्तापि ग्राह्यानन्तव्रते तिथिः ।" इति ।

माधवोक्तेः ।

"मुहूर्त्तमपि चेद्भाद्रे पौर्णमास्यां चतुर्दशी ।
सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥" इति ।

स्कान्दाच्च । अतश्च पूर्णिमायुक्तायामुदयकालव्यापिन्यां चतुर्दश्यामनन्तव्रतं कार्यमिति सिद्धम् । दिनद्वये उदयव्यापित्वे सम्पूर्णत्वात् पूर्वैव, दिनद्वये उदयाव्यापित्वेऽपि पूर्वा, मध्याह्ने सत्त्वात् । आश्विनकृष्णचतुर्दश्यां शस्त्रादिहतानामेव श्राद्धमुक्तं कालादर्शे—

"श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये" । इति ।

नागरखण्डेऽपि—

"अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप !" ॥ इति ।

कार्तिककृष्णचतुर्दश्यां चन्द्रोदयव्यापिन्यामभ्यङ्गस्नानं कार्यम् । तदुक्तं हेमाद्रौ भविष्ये—

"अश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये ।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ॥" इति ॥

अत्राश्विनोऽमान्तो बोध्यः सूर्योदयव्यापिन्यामप्युक्तं हेमाद्रिनिर्णयामृतयोर्भविष्ये—

"कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुणा ॥" इति ।

'इनः' सूर्यः । केचित्त्विनपदस्य चन्द्रे लक्षणेत्याहुः, तन्मन्दम्; लक्षणायां भानाभावात् । अपरे तु इनश्चन्द्र इति व्याचख्युस्तदप्यशुद्धम्, इनशब्दस्य सूर्यवाचित्वात् । गौडास्तु सूर्योदयव्यापिन्यां कुर्वन्ति स्नानम् ।

अत्र केचिदाहुः—सूर्योदयो गौणकालः, मुख्यकालोत्तरत्वात् । तदेवाह मण्डनः—

"स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत् ॥
गौणकालत्वमिच्छन्ति केचित्प्राक्तनकर्मणि ।
मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ॥
गौणकाले तु कर्तव्यं गौणोऽप्यत्रेदृशो भवेत् ।"

'ईदृशो' मुख्यकालसदृश इति । वस्तुतस्त्वयं गौणकालो यत्र शास्त्रेण मुख्यकालातिक्रमे कालान्तरमुक्तं तस्मिन् कर्मणि बोध्यः, न तु सर्वत्र काम्येऽपि कर्मणीति ।

यत्तु केचित्—

"तैलाभ्यङ्गं तथा शय्यां परान्नं कांस्यभोजनम् ।
कार्तिके वर्जयेद् यस्तु परिपूर्णव्रती भवेत् ॥"

इति पाद्मनिषेधाद् हविष्यं कार्तिकव्रतिभिन्नपरमित्याहुः, तन्न;

"नरकस्य चतुर्दश्यां तैलाभ्यङ्गञ्च कारयेत् ।
अन्यत्र कार्तिकस्नायी तैलाभ्यङ्गञ्च वर्जयेत् ॥"

इति तत्रैव प्रतिप्रसवश्रुतेः । दिनद्वये तद्व्याप्तौ सामान्यवचनात् पूर्वा, दिनद्वये तदव्याप्तावपि पूर्वा ।

"पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।
पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ॥"

इति स्कान्दात् । अत्र,

"तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीम् ।

लब्ध्वेति शेषः ।

प्रातःस्नानं तु यः कुर्याद् यमलोकं न पश्यति ॥"

इति ब्राह्मोक्तेश्चातुर्वर्ण्यस्याप्यधिकारः । चतुर्दशीमारभ्य चतुर्ष्वपि दिनेषु काम्यस्नानमुक्तं पृथ्वीचन्द्रोदये ब्राह्मे—

"इषे भूते च दर्शे कार्त्तिकप्रथमे दिने ।
यदा स्वातिस्तदाभ्यङ्गस्नानं कुर्याद्दिनोदये ॥
ऊर्जे शुक्लद्वितीयायां तिथौ यस्तु शुभे दिने ।
मानवो मङ्गलस्नायी नैव लक्ष्म्या वियुज्यते ॥
दीपैर्नीराजनं तत्र सैषा दीपावली स्मृता ।" इति ।

स्नानेऽपामार्गभ्रामणमुक्तं ब्राह्मे—

"अभ्यङ्गस्नानमध्ये तु नरकस्य क्षयाय वै ।
अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि ॥"

"अभ्यङ्गस्नानमध्ये तु नरकस्य क्षयाय वै ।
अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि" ॥ इति ।

मदनरत्ने पाद्मेऽपि—

"अपामार्गमथो तुम्बी प्रपुन्नाडमथापरम् ।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥" इति ।

मन्त्रः—

"सितालोष्टसमायुक्त ! सकण्टकदलान्वित ! ।
हर पापमपामार्ग ! भ्राम्यमाणः पुनः पुनः ॥" इति ।

अत्र तर्पणमुक्तं भविष्ये—

"ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ।" इति ।

एतत्तर्पणं सव्येनापसव्येन वा कार्यम्,

"यज्ञोपवीतिना कार्य्यं प्राचीनावीतिनाऽथवा ।
देवत्वं च पितृत्वं च यमस्य स्याद् द्विरूपता" ॥

इति तत्रैवोक्तेः ।

इदं च तर्पणं जीवत्पित्रापि कार्यम् । तदुक्तं पाद्मे—

"जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः ।
कृष्णैस्तिलैस्तथा चान्यैः कुर्यात्तर्पणमिच्छया ॥" इति ।

अन्यैः शुक्लैः। देवत्वपक्षे शुक्लतिलैः, पितृत्वपक्षे कृष्णतिलैरिति बोध्यम्।

भीष्मतर्पणं माघशुक्लाष्टम्यामुक्तम्। लैङ्गे विशेषः—

"ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान्।
दानं दत्वा तु तेभ्यस्तु यमलोकं न गच्छति॥" इति।

अस्यां प्रदोषसमये दीपदानं कार्यम्। तदुक्तं भविष्ये—

"ततः प्रदोषसमये दीपान् दद्याद् मनोरमान्।
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च॥
प्राकारोद्यानवीथीषु प्रतौलीनिष्कुटेषु च।
मन्दुरासु विविक्तासु हस्तिशालासु भूरिशः॥"

"वाजिशाला तु मन्दुरा" इत्यमरः। इदं दीपदानं संलग्नं कार्यम्। तदुक्तं ज्योतिर्निबन्धे नारदेन—

"इषासितचतुर्दश्यामिन्दुक्षयतिथावपि।
ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत्॥
कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम्।" इति।

अत्र यमलोकदर्शनाभावकामो नरकचतुर्दश्यां स्नास्ये—इति सङ्कल्प्य, कृताभ्यङ्गः स्नात्वा कृतनित्यक्रियोऽनन्तरं यमतर्पणं करिष्ये—इति सङ्कल्पं कृत्वोपवीती शुक्लतिलैः प्राचीनावीती चेत् कृष्णतिलैर्यमं धर्मराजं मृत्युमन्तकं वैवस्वतं कालं सर्वभूत-क्षयमौदुम्बरं दध्नं नीलं परमेष्ठिनं वृकोदरं चित्रगुप्तं तर्पयामीति

चतुर्दशनामभिर्यमं सन्तर्प्य, यथाकालं तपोधनान् भोजयित्वा, स्वयं च भुक्त्वा प्रदोषसमये दीपान् दद्यात्। उक्तस्थलेष्विति प्रयोगः।

कार्त्तिकशुक्लचतुर्दशी वैकुण्ठचतुर्दशी इयमरुणोदयव्यापिनी ग्राह्या। तदुक्तं सनत्कुमारसंहितायाम्—

"वर्षे वै हेमलम्बाख्ये मासि श्रीमति कार्त्तिके।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति॥
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके।
स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत्॥
संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत्।
स्वयमेव स्वमात्मानं चरन् पाशुपतव्रतम्॥" इति।

व्रतमित्यनेनोपवास उच्यते,

"ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम्।
दण्डपाणेर्महानाम्नि वनेऽस्मिन् कृतपारणः॥"

इति वचने पारणाशब्दश्रवणात्।

अस्यां श्रीविश्वेश्वरदर्शनान्मुक्तिरुक्ता काशीखण्डे—

"कार्त्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत्।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः॥" इति।

मार्गशीर्षशुक्लचतुर्दशी पिशाचमोचनी। अस्यां पिशाचमोचन-तीर्थयात्रोक्ता काशीखण्डे—

"मार्गशुक्लचतुर्दश्यां कपर्दीश्वरसन्निधौ ।
स्नात्वाऽन्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ॥
इमां सांवत्सरीं यात्रां ये करिष्यन्ति मानवाः ।
तीर्थप्रतिग्रहात् पापान्निस्तरिष्यन्ति ते द्विजाः ॥" इति ।

माघकृष्णचतुर्दश्यां कृत्यमाह हेमाद्रौ यमः—

"अनर्काभ्युदिते काले माघकृष्णचतुर्दशी ।
स्नातः सन्तर्प्य तु यमं सर्वपापैः प्रमुच्यते ॥" इति ।

अत्र जीवत्पितृकस्याप्यधिकार इत्युक्तं प्राक् । माघशुक्लचतुर्दशी रटन्त्याख्या । अस्यां कृत्यमुक्तं ब्रह्मपुराणे—

"माघशुक्लचतुर्दश्यां विष्णोर्देहान्मरीचयः ।
निश्चेरुस्तिलकाकाराः शतशोऽथ सहस्रशः ॥
अनर्काभ्युदिते काले सत्सु तारांशुकेष्वपि ।
राजा च तत्र सम्पूज्यो यमः प्रलयभास्करः ॥"

तथा—

"सर्वाङ्गसन्धिसम्भूता नद्यो विष्णोश्च तत्र वै ।
अरुणोदयवेलायामारटन्त्योऽपि नित्यशः ॥
तत्रोपोष्य त्रयोदश्यां सम्प्राप्ते तु निशाक्षये ।
स्नात्वा पूज्यो जगद्भर्त्ता हरिः, पूज्याश्च तारकाः ॥
यमो नद्यश्च तीर्थानि देवताः पितरस्तथा ।
वह्निः पूज्यश्च भगवान् घृताक्तैस्तिलतण्डुलैः ॥

नमः प्रणवसंयुक्तान् सतिलांश्च जलाञ्जलीन् ।
यमाय सप्त पित्रे च धर्मराजाय सप्त च ॥
मृत्यवे सप्त देयाश्च तथा सप्ताऽन्तकाय च ।
वैवस्वताय सप्तान्यान् सप्त कालाय वै बहिः ॥
सप्त देयाश्च विधिवत् सर्वप्राणहराय च ॥" इति ।

एवमेकोनपञ्चाशदञ्जलयो भवन्ति । तथा—

"कृसरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम् ।
श्राद्धं दत्वा पितृभ्यश्च विमुक्तः सर्वपातकैः ॥
ततो वितत्य बन्धुभ्यः कृसरं भक्षयेत् स्वयम् ।" इति

अथ फाल्गुनकृष्णा चतुर्दशी शिवरात्रिः ।

शिवरात्रिविनिर्णयो मया सुधियां प्रीतिविवर्द्धनोचितः ।
क्रियते गुरुदिष्टवर्त्मना मतमास्थाय गुरोर्गरीयसः ॥

तत्र शिवरात्रिशब्दो निर्मथ्यन्यायेन योगरूढः । तत्पुरुषसमासेन योगेन प्रवर्तमानः शब्दो रूढ्या माघकृष्णचतुर्दशीरूपे कालविशेषे नियम्यते । तत्स्वरूपं स्कान्दे—

"माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी ।
शिवरात्रिः समाख्याता सर्वपापनिषूदनी ॥" इति ।

कामिकेऽपि—

"माघमासे सिते पक्षे विद्यते या चतुर्दशी ।
* शिवरात्रिस्तु सा ज्ञेया सर्वपुण्यशुभावहा ॥" इति ।

---

* आदर्शपुस्तके—'शिवरात्रिः स्यात्सर्वपुण्यशुभावहा' पाठोऽस्ति ।

इयं निशीथव्यापिनी ग्राह्या । तदुक्तमीशानसंहितायाम्—

"माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गमभूत्तत्र कोटिसूर्यसमप्रभम् ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ।
व्याप्यार्द्धरात्रं यस्यां तु लभ्यते या चतुर्दशी ॥
तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्जनैः ।
पूर्वेद्युर्वा परेद्युवा महानिशि चतुर्दशी ॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद् व्रतं नरः ।" इति ।

अत्र महानिशाशब्देन मध्यमयामयोर्मध्यमुच्यते,

"महानिशा तु विज्ञेया मध्यं मध्यमयामयोः ।"

इति वाक्यात् । नारदसंहितायामपि—

"अर्द्धरात्रयुता यत्र माघकृष्णा चतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥" इति ।

दिनद्वये निशीथव्यापिन्यव्यापिनी चेदुत्तरैव ।

तदुक्तं माधवीये कामिकस्मृत्यन्तरयोः—

"आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥
प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥" इति ।

अत्र प्रदोषवेधस्तत्रैव वायुपुराणे—

"त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥" इति ।

पूर्वेद्युरेव प्रदोषनिशीथोभयव्याप्तौ पूर्वा,

"त्रयोदशी यदा देवि ! दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥" इति ।

हेमाद्रिधृतस्कान्दात् । दिनभुक्तिरस्तमयः । परेद्युरेवोभयव्याप्तौ परैव,

"निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा ।"

इति कामिकात् । यदा पूर्वेद्युर्निशीथव्याप्तिः परेद्युः प्रदोषव्याप्तिस्तदा पूर्वैव,

"पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ।
माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी ॥
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ।
अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ॥
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ।"

इति माधवपरिधृतस्कान्दनागरखण्डपुराणेभ्यः । हेमाद्रिमदनौ तु 'अर्द्धरात्राद्' इत्यस्मादेव वचनाद्दिनद्वये निशीथव्याप्तौ पूर्वेत्याहतुः । असावेव निर्णयो मासशिवरात्रावपि ज्ञेयः । यत्तु निर्णयामृतकारः प्रदोषव्यापिनी ग्राह्येत्येतद्वाक्यं प्रमाणीकृत्य सर्वापि शिवरात्रिः प्रदोषव्यापिन्येव ग्राह्येत्याह तदसमञ्जसम्,

सर्वेषां निशीथव्याप्तिनिर्णायकवचनानां वैयर्थ्यापातात्। प्रदोषवाक्यस्य चोदाहृतरीत्योपपत्तेश्च। अस्मिन् व्रते सर्वेषामधिकारः।

"शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम्।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम्॥"

इति हेमाद्रिधृतेशानसंहितोक्तेः। इदं व्रतं नित्यमित्युक्तं स्कान्दे—

"परात्परतरं नास्ति शिवरात्रिः परात्परम्।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम्॥
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः।"

इत्यनिष्टश्रुतेः।

"मम भक्तस्तु यो देवि! शिवरात्रिमुपोषकः।
शिवञ्च पूजयित्वा यो जागर्ति च चतुर्दशी॥
मातुः पयोधररसं न पिबेत् स कदाचन।
गणत्वमक्षयं दिव्यमक्षय्यं शिवशासनम्॥
सर्वान् भुक्त्वा महाभोगान् मृतो भूयो न जायते।"

इति तत्रैव फलश्रवणात् काम्यञ्च। अत्र नित्यव्रते पूजैव प्रधानम्, पूर्वोक्तानिष्टवाक्ययोः पूजामात्रग्रहणात्। काम्यव्रतविधायकवाक्येषु त्रितयग्रहणात् काम्यव्रते उपवासजागरणपूजाः प्रधानम्। प्रतिवर्षं काम्यस्यास्यावधिरुक्तो माधवीये ईशानसंहितायाम्—

"एवमेतद् व्रतं कुर्यात्प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा ॥" इति ।

इयं योगविशेषेणातिप्रशस्तेत्युक्तं माधवीये स्कन्दपुराणे—

"माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमवारो भवेद्देवि ! कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगे च तद्भवेदुत्तमोत्तमम् ।" इति ।

अत्र कृत्तिवासेश्वरार्च्चाऽप्युक्ता तत्रैव—

"कृत्तिवासेश्वरं लिङ्गमर्च्चयन्ति शिवं शुभम् ।
ते यान्ति परमस्थानं सदा शिवमनामयम् ॥" इति ।

अत्र उमासहितं शिवं पूजयेत् । पूजा च रात्रौ प्रहरे प्रहरे कार्या,

"कर्त्तव्या यामपूजा च स्नानं पञ्चामृतेन च ।"

इति स्कान्दात् । इदं च व्रतं पातकादिमोक्षकामनायां प्रतिमासं कार्यम् । तदुक्तं मदनरत्ने स्कन्दपुराणे—

"प्रतिमासं कार्यमित्युपक्रम्य—
यतः प्रति चतुर्दश्यां पूजा यत्नेन मे कृता ।
तथा जागरणं रात्रौ सन्निधौ मे कृतं तदा ॥
तेन कर्मविपाकेन मुक्ताऽसौ पातकेन च ।" इति ।

काम्यमासशिवरात्रिव्रतस्य ग्रहणकालावधिव्रतहेमाद्रौ स्कान्दे—

"आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा ।
गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् ॥
एवं द्वादशवर्षे तु द्वादशैव तपोधनान् ॥"

आमन्त्र्येति शेषः । तत्रैव पक्षान्तरम्—

"सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतम् ।

इत्युपक्रम्य—

चतुर्दशाब्दं कर्त्तव्यं शिवरात्रिव्रतं शुभम् ।"

इति संक्षेपः ।

अथात्र सर्वलोकोपकारार्थं वार्षिकशिवव्रतानुष्ठानप्रयोगं वदामः । तत्र यद्यपि भूयांसः प्रकारा दृश्यन्ते, तथापि प्रमाणीभूतशिवरहस्यसंवादी तावत्प्रकारः प्रदर्श्यते—

"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥
तस्मान्मृदाऽपि कर्त्तव्यं ललाटे च त्रिपुण्ड्रकम् ।"

इति लिङ्गपुराणात् त्रिपुण्ड्ररुद्राक्षमालान्वितो मासपक्षाद्युल्लिख्य श्रीसदाशिवचरणपद्मपरागसारूप्यकामोऽहं महाशिवरात्रौ वार्षिकं शिवरात्रिव्रतं करिष्ये—इति प्रातः सङ्कल्प्य मन्त्रान् पठेत् । नूतनव्रते तु नूतनमिति विशेषः । मन्त्रास्तु—

"शिवरात्रिव्रतं ह्येतत् करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते ! ॥
चतुर्दश्यां निराहारो भूत्वा शम्भोऽपरेऽहनि ।
भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे महेश्वर: ॥" इति ।

ततो रात्रौ पूर्वयामे शिवपूजनं करिष्ये—इति सङ्कल्प्य सञ्जात-

प्रतिष्ठलिङ्गे शिवं मूलमन्त्रेण 'त्र्यम्बकम्' इति वैदिकेन वा दुग्धाभिषेकपूर्वकमावाहनादिषोडशोपचारैरर्चयेत् । पूर्वपूजायामर्घ्यदाने मन्त्रः—

"शिवरात्रिव्रतं देव ! पूजाजपपरायणः ।
करोमि विधिवद्दत्तं गृहाणार्घ्यं महेश्वर ! ॥" इति ।

ततस्तत्कथाः श्रुत्वा द्वितीययामे दध्यभिषेकपूर्वकं प्राग्वदर्चयेत् । अर्घ्यदाने मन्त्रः—

"नमः शिवाय शान्ताय सर्वपापहराय च ।
शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह ॥" इति ।

पूर्ववत्कथाः श्रुत्वा तृतीययामे घृताभिषेकपूर्वकं प्राग्वदर्चयेत् । अर्घ्ये मन्त्रः—

"दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीपते ! ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त ! गृहाण मे ॥" इति ।

चतुर्थे तु यामे मध्वभिषेकपूर्वकमर्चयेत् । अर्घ्यप्रदाने मन्त्रः—

"मया कृतान्यनेकानि पापानि हर शङ्कर ! ।
शिवरात्रौ ददाम्यर्घ्यमुमाकान्त ! गृहाण मे ॥" इति ।

ततः पूजान्ते—

"भवाय भवनाशाय महादेवाय धीमते ।
रुद्राय नीलकण्ठाय शिवाय शशिमौलिने ॥
उग्रायोग्राघनाशाय भीमाय भवरूपिणे ।
ईशानाय नमस्तुभ्यं पशूनां पतये नमः ॥" इति ।

चतुर्थ्यन्तैर्नामभिर्विल्वपत्राणि समर्चयेत् । एवं रात्रिमतिवाह्य उषसि व्रतं समर्पयेत् । तत्र मन्त्रः—

"अविघ्नेन व्रतं देव ! त्वत्प्रसादात् समापितम् ।
क्षमस्व जगतां नाथ ! त्रैलोक्याधिपते ! हर ! ॥
यन्मयाऽद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् ।
त्वत्प्रसादान्महादेव ! व्रतमद्य समर्पितम् ॥
प्रसन्नो भव मे श्रीमन् ! सद्गतिः प्रतिपाद्यताम् ।
त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥" इति ।

ततो द्वितीयेऽह्नि स्नात्वा कृतनित्यक्रिय एकादश विप्रान् अशक्तो यथासामर्थ्यं भोजयित्वा,

"संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर ! ।
प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव ॥"

इति देवं सम्प्रार्थ्य पुत्रमित्राद्यन्वितः पारणं कुर्यात् । यदा प्रतिष्ठितं लिङ्गं नास्ति तदैवं प्रकारः—

हराय नम इति मृदमानीय, तां संशोध्य, महेश्वराय नम इति लिङ्गं विधाय, शूलपाणये नम इति शिव ! इह सुप्रतिष्ठितो भवेति प्रतिष्ठाप्य,

"ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥"

इति ध्यात्वा पूर्वोक्तप्रकारेण पूजयेदित्यलं विस्तृतिधारया। पारणं तूर्वरितचतुर्दश्यामेव कार्यम्। तदुक्तं माधवीये स्कन्द-पुराणे—

"उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम्।
कृतैः सुकृतलक्षैश्च लभ्यते यदि वा न वा॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै।
संस्नातानि भवन्तीह भूतायां पारणे कृते॥
तिथीनामेव सर्वासामुपवासव्रतादिषु।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम्॥" इति।

यत्तु—

"जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च।
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्॥" इति,

यच्च स्कान्दे—

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्॥"

इति तत्पारणाकाले चतुर्दश्यलाभपरम्।

अथ चतुर्दश्यामुपवासः केदारकुण्डोदकपानं च कार्यमित्युक्तं स्कन्दपुराणे—

"चैत्रकृष्णाचतुर्दश्यामुपवासं विधाय च।
केदारोदकपानञ्च तथा तत्र फलं लभेत्॥" इति।

चतुर्दशी शनिवारेण सिद्धा, रविवारेण विरुद्धा। योगिन्यत्र पश्चिमायाम्। इति चतुर्दशी निर्णीता।

अथ अमा निर्णीयते। सा व्रतादावुत्तरा ग्राह्या, युग्मवाक्यात्। उपवासेऽप्ययमेव निर्णयः,

"अमावास्या तृतीया च ता उपोष्याः परान्विताः।"

इति स्मृतेः। इयं सोमवारयुक्ता कपिलातीर्थे श्राद्धादावतिप्रशस्ता,

"अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते।
तीर्थे कपिलधारेऽस्मिन् गयायां पुष्करेण किम्॥
दिव्यन्तरिक्षभूतानि यानि तीर्थानि सर्वशः।
तान्यत्र त्ववतिष्ठन्ति दर्शे सोमदिनान्विते॥"

इति काशीखण्डोक्तेः। शङ्खस्मृतावपि—

"अमावास्या तु सोमेन सप्तमी भानुना तथा।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी॥
चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाः।
स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत्॥" इति।

अमायाः सोमादियोगे पुष्करसंज्ञोक्ता हेमाद्रौ श्रीमहाभारते—

"अमा सोमे तथा भौमे गुरुवारे यदा भवेत्।
तत्तीर्थं पुष्करं नाम सूर्यपर्वशताधिकम्॥" इति।

शातातपः—

"अमावास्या सोमवारे सूर्यवारे च सप्तमी।
अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्दशी॥

तत्र यः कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
षष्टिवर्षसहस्राणि कर्त्ता तत्फलमश्नुते ॥" इति ।

अथ कृष्णप्रतिपदादिज्येष्ठामायां वटसावित्रीव्रतमुक्तं भविष्ये—

"अमायां च तथा ज्येष्ठे वटमूले महासती ।
त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥" इति ।

इदं कान्यकुब्जेषु प्रसिद्धम् । तच्च पूर्वविद्धायामेव कार्यम्,

"भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्जयित्वा नरश्रेष्ठ ! सावित्रीव्रतमुत्तमम् ॥"

इति ब्रह्मवैवर्त्तात् । भाद्रामायां दर्भसंग्रहः कार्यः,

"मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥"

इति हारीतोक्तेः । नभः श्रावणः । स च दर्शान्तो बोध्यः । 'अयातयामाः' अगतरसा इत्यर्थः । पूर्णिमान्तमासेनाऽऽश्विनामायोगविशेषेण गजच्छायेत्युक्तं वायुपुराणे—

"हंसे हंसस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥"

'हंसः' सूर्यो हस्तनक्षत्रं च । अत्र श्राद्धं प्रशस्तमित्युक्तं प्राक् । कार्त्तिकामायामभ्यङ्गस्नानं कृत्वा अलक्ष्मीपरिहाराय स्वेष्टदेवतां पूजयेदित्युक्तं कालादर्शे—

"प्रत्यूषे अश्वयुग्दर्शे कृताभ्यङ्गादिमङ्गलः ।
भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये ॥"

अत्र कृत्यान्तरं हेमाद्रावादित्यपुराणे--

"एवं प्रभातसमये अमायाश्च नराधिप ! ।
स्नात्वा देवान् पितॄन् भक्त्या सम्पूज्याऽथ प्रणम्य च ॥
कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः ।
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च ।
ब्राह्मणान् भोजयित्वाऽदौ संभोज्य च बुभुक्षितान् ॥
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ।"

यत्तु—

"भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥"

इत्यनेनामायां भोजनं रात्रौ निषिद्धम्, तद् रागप्राप्तं न वैधम्; विधिस्पृष्टे निषेधानवकाशात् । इयमेव रात्रिः सुखरात्रिः । अत्र सर्वदेवानां सुखशयनमुक्तं तत्रैव—

"अमायां चैव देवास्तु कार्त्तिके मासि केशवात् ।
अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु ॥
लक्ष्मीर्दैत्यदवान्मुक्ता सुखं सुप्ताऽम्बुजोदरे ।
अतोऽर्थं विधिवत् कार्या तुष्ट्यै तु सुखसुप्तिका ॥" इति ।

विशेषो ब्राह्मे—

"अर्द्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् ।
अतः स्वलङ्कृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः ॥
सुधाधवलिताः कार्याः पुष्पमालोपशोभिताः ।" इति ।

अत्र निशीथोत्तरमलक्ष्मीनिःसारणमुक्तं निर्णयामृते भविष्ये—

"एवं गते निशीथे तु जने निद्रार्द्धलोचने ।
तावन्नगरनारीभिस्तूर्य्यडिण्डिमवादनैः ॥
निष्काष्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ।"इति ।

इयं प्रदोषव्यापिनी ग्राह्या, कर्मकालत्वात् । दिनद्वये तद्व्याप्तावुत्तरा, सामान्यनिर्णयात् । उभयदिने तद्व्याप्त्यभावेऽर्द्धरात्रव्यापिनी ग्राह्या, लक्ष्म्या गमनकालत्वात् । अस्यामेव केदारगौरीव्रतं कार्यम्,

"आश्विनस्यासिते पक्षे अमावास्या यदा भवेत् ।
तस्यां व्रतमिदं कार्यं यथोक्तं शम्भुना पुरा ॥"

इति पद्मपुराणात् । इयमत्र सामान्यनिर्णयादुत्तरा ग्राह्या । माघामायां ब्राह्मणं सम्पूज्य नवनीतधेनुं ब्राह्मणाय दद्यादित्युक्तं निर्णयामृते ब्रह्मपुराणे—

"अमायां माघमासस्य पूजयित्वा पितामहम् ।
गायत्र्या सहितं देवं वेदवेदाङ्गभूषितम् ॥
नवनीतमयीं धेनुं ब्राह्मणाय निवेदयेत् ।" इति ।

अत्रैव योगविशेषेणाऽर्द्धोदय उक्तो हेमाद्रौ स्कान्दे—

"माघामायां व्यतीपाते आदित्ये विष्णुदैवते ।
अर्द्धोदयं तमित्याहुः सहस्रार्कग्रहैः समः ॥" इति ।

मदनरत्ने भारतेऽपि—

"अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥
दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।" इति ।

दिवैवेत्यर्द्धं निर्णयामृत एव पठितं नान्यग्रन्थेषु । अत्र दानमुक्तं स्कान्दे—

"अर्द्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम् ।
शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसम्मिताः ॥
यत्किञ्चित् क्रियते दानं मेरुसन्निभमिष्यते ।
चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् ॥
चत्वारिंशत्पलं वाऽथ पञ्चविंशतिमेव च ।
निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ॥
पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम् ।
तदभावे तदर्द्धं वा तदर्द्धं वापि कारयेत् ॥
कृत्वा तु तण्डुलैः शुद्धैः पद्ममष्टदलं शुभम् ।
अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् ॥
तेषां प्रीतिकरार्थाय श्वेतमाल्यैः सुशोभनैः ।
वस्त्रादिभिरलङ्कृत्य ब्राह्मणाय निवेदयेत् ॥" इति ।

दाने मन्त्रः—

"सौवर्णं पायसामत्रं यस्मादेतत्त्रयात्मकम् ।
आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम ! ॥"

'अमत्रम्' पात्रम् ।

"समुद्रमेखलां पृथ्वीं सम्यग् दत्वा तु यत्फलम् ।
तत्फलं लभते मर्त्यः कृत्वा दानममत्रकम् ॥" इति ।

हेमाद्रौ स्कान्दे तु विशेषः—

"ब्रह्मविष्णुमहेशानां सौवर्णं पलसङ्ख्यया ।
प्रतिमास्तु प्रकर्त्तव्या तदर्द्धेन द्विजोत्तम ! ॥
साग्रं शतत्रयं शम्भोर्द्रोणानां तिलपर्वताः ।"

'शम्भोः' ब्रह्मणः ।

"कर्त्तव्यौ पर्वतौ विष्णुरुद्रयोः पूर्वसंख्यया ।
शय्यात्रयं ततः कुर्यादुपस्करसमन्वितम् ॥
मध्याह्ने तु नरः स्नात्वा शुचिर्भूत्वा समाहितः ।
तिलपर्वतमध्यस्थं पूजयेद् देवतात्रयम् ॥
ब्रह्मविष्णुशिवप्रीत्यै दातव्यं तु गवां त्रयम् ।
हिरण्यभूमिधान्यादिदानं विभवसारतः ॥
देवतात्रयमुद्दिश्य कर्त्तव्यं भक्तिशक्तितः ।
एतत्सर्वं ब्राह्मणेभ्यो दातव्यं च प्रयत्नतः ॥" इति ।

अथ यस्यां कस्याममायां योगविशेषैः पारिभाषिको व्यतीपात उक्तो भारते—

"श्रवणाश्विधनिष्ठार्द्रानागदेवतमस्तकैः ।
अमा चेद् रविवारेण व्यतीपातः स उच्यते ॥
तत्र जप्तं हुतं दत्तं सर्वं कोटिगुणं भवेत् ॥"

'नागदैवतम्' आश्लेषा । 'मस्तकम्' मार्गशीर्षम् । चान्द्रमाघाऽमावास्या युगादिः, "पञ्चदशी माघमासे" इति वचनात् । चान्द्रफाल्गुनाऽमा मन्वादिः, "फाल्गुनस्य त्वमावास्या" इति पूर्वोक्तवाक्यात् । अमा गुरुवारेण सिद्धा, शनिवारेण विरुद्धा । योगिन्यत्रैशान्याम् । इत्यमा निर्णीता ।

अथ पौर्णमासी निर्णीयते । भविष्योत्तरे—

"पौर्णमासी महाराज ! सोमस्य दयिता तिथिः ।
पूर्णो मासो भवेद् यस्मात् पौर्णमासी ततः स्मृता ॥" इति ।

सा सावित्रीव्यतिरिक्ता परैव । तदुक्तं ब्रह्मवैवर्त्ते—

"भूतविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ ! सावित्रीव्रतमुत्तमम् ॥" इति ।

यत्तु "चतुर्दश्या च पूर्णिमा" इति युग्मवाक्यम्, तत् सावित्र्यादिव्रतविषयम् । अत्र हेमाद्रिमाधवमतयोर्विप्रतिपत्तिः । हेमाद्रिमते सावित्रीव्रतमन्तरेण अमापूर्णिमे परे भवतो न पूर्वदिनेऽष्टादशनाडीमितचतुर्दशीसत्त्वेऽपवादः । माधवमते पूर्वदिनेऽष्टादशनाडीमितचतुर्दशीसत्त्वे सावित्रीव्रतेऽपि परे भवतोऽमावास्यापूर्णिमे,

"भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।"

इति स्कान्दोक्तदूषणदूषितत्वात्। तदिदं माधवमतं रीतिकाभरण-वदापातरमणीयम्। हेमाद्रिमतं सुवर्णस्वर्णाभरणवद् रमणीयम्। तथाहि—

"नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन।
एकादशी न कर्त्तव्या दशमीसंयुता विभो!॥
भूतविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन।"

इत्यस्य शेषोऽयम्,

"नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा।
भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्॥"

इति लाघवात्। तथा च यत्र भूतविद्धा निषिद्धा तत्रैवायं विशेषविधिर्भवति, न तु सावित्रीव्रते। सोऽपि कर्मकालव्याप्ति-शास्त्रौदासीन्य इति न माधवमतदूषणनिस्तारः। अस्यामप्यमा-वास्यावच्छ्राद्धं नित्यम्,

"अमावास्याव्यतीपातपौर्णमास्यष्टकासु च।
विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते॥"

इति पितामहोक्तेः। तच्चाऽपिण्डकं कार्यम्। तदाह निर्णय-दीपे गर्गः—

"पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम्।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा॥" इति।

अथ चैत्रपौर्णमास्यां दमनेन शिवपूजोक्ता वायवीये—

"संवत्सरकृतार्चायाः साफल्यायाऽखिलान् सुरान् ।
दमनेनार्चयेद्देवं विशेषेण सदाशिवम् ॥" इति ।

इयं मन्दादिवारेणातिशस्तेत्युक्तं ब्रह्मपुराणे—

"मन्दे वाऽर्के गुरौ वापि वारेष्वेतेषु चैत्रिकी ।
तत्राऽऽश्वमेधिकं पुण्यं दानेन लभते नरः ॥" इति ।

इयं मन्वादिः, पूर्वोक्तवचनात् । वैशाख्यां वैशाखव्रतिनां वैशाखोद्यापनमुक्तं पद्मपुराणे—

"मासमेकं बहिः स्नात्वा नद्यादौ विमले जले ।
एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा ॥
उपोष्य नियतो भूत्वा कुर्यादुद्यापनं ततः ।
मण्डपं कारयेदादौ कलशं तत्र विन्यसेत् ॥
निष्केण वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितम् ॥
लक्ष्मीयुतं जगन्नाथं पूजयेदासने बुधः ।
भूषणैश्चन्दनैः पुष्पैर्दीपैर्नैवेद्यसञ्चयैः ॥
एवं सम्पूज्य विधिवद् रात्रौ जागरणं चरेत् ।
श्वोभूते कृतमैत्रोऽथ ग्रहवेद्यां ग्रहान् यजेत् ॥
होमं कुर्यात् प्रयत्नेन पायसेन विचक्षणः ।
तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा ।
प्रतद्विष्णुरनेनैव इदं विष्णुरनेन वा ॥

व्रतसम्पूर्तिसिद्ध्यर्थं धेनुमेकां पयस्विनीम् ।
पादुकोपानहच्छत्रं गुरवे व्यजनं तथा ॥
शय्यां स्वोपस्करां दद्याद् दीपिकां दर्पणं तथा ।
ब्राह्मणान् भोजयेत् त्रिंशत् तेभ्यो दद्याच्च दक्षिणाम् ॥
कलशान् जलपूर्णांस्तु तेभ्यो दद्याद् यवांस्तथा ॥
एवं कृते माधवस्य उद्यापनविधौ शुभे ।
फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात् ॥" इति ।

यदा वैशाखो मलमासस्तदा तस्मिन्नेवारब्धं मलमासात् प्राग् यत्काम्यमसमापितम्—'सम्प्राप्ते मलमासेऽपि तत्समाप्यमसंशयम् ।" अस्मात्काण्वगृह्यात्समापनीयमिति हेमाद्रिमदनावाहतुः । अस्यामेव शृतान्नं चोदकुम्भं धर्मराजप्रीतये देयमित्युक्तं जावालिना—

"शृतान्नमुदकुम्भञ्च वैशाख्याञ्च विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥" इति ।

'शृतम्' पक्वम् । अस्यां कृष्णाजिनदानमप्युक्तं निर्णयामृते पुराणसमुच्चये—

"वैशाख्यां पौर्णमास्यां तु विशाखा तु विशेषतः ।
यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम् ॥
तिलैः प्रच्छाद्य वासोभिः सर्ववस्त्रैरलंकृतम् ।
ससमुद्रगुहा तेन सशैलवनकानना ।
सप्तद्वीपान्विता दत्ता पृथिवी नाऽत्र संशयः ॥" इति ।

हेमाद्रौ भविष्ये—

"कुम्भान् स्वच्छजलैः पूर्णान् हिरण्येन समन्वितान् ।
वैशाखे ब्राह्मणे दत्वा न शोचति कृतान्ततः ॥" इति ।

ज्येष्ठपौर्णमास्यां सावित्रीव्रतमुक्तं भविष्ये—

"ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां तथा व्रतम् ।
चीर्णं पुरा महाभक्त्या कथितं ते मया नृप !॥" इति ।

"प्रतिपत्पञ्चमीभूतसावित्रीव्रतपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः स्युः परान्विताः ॥"

इति ब्रह्मवैवर्त्तात्,

"भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् ।
वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन ! ॥"

इति स्कान्दाच्च इयं पूर्वविद्धा ग्राह्या । अत्र विशेषो भविष्ये—

"सावित्रीप्रतिमां कुर्यात्सौवर्णीं वापि मृण्मयीम् ।
सार्द्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः ॥

पूजयेदिति शेषः ।

सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमः ।
रात्रौ जागरणं कृत्वा प्रभाते विमले ततः ॥
तामपि ब्राह्मणे दत्वा प्रणिपत्य क्षमापयेत् ।"

प्रतिमादाने मन्त्रः—

"सावित्रीयं मया दत्ता सहिरण्या महासती ।
ब्रह्मणः प्रीणनार्थाय ब्राह्मण ! प्रतिगृह्यताम् ॥" इति ॥

अत्र सर्वव्रतेषु कथादिकं विस्तरभिया नोक्तम्, तत् श्रीमातुलकृतव्रतार्के द्रष्टव्यम्। अत्र विशेषो निर्णयामृते आदित्यपुराणे—

"ज्येष्ठे मासि तिलान् दद्यात्पौर्णमास्यां विशेषतः।
सोऽश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः॥" इति।

विष्णुरपि—

"ज्येष्ठी ज्येष्ठायुता चेत्स्याच्छत्रोपानत्प्रदानेन नरो नराधिपत्यमाप्नोति॥" इति।

आषाढी कोकिलाव्रते सन्ध्याकालव्यापिनी ग्राह्या,

"आषाढपौर्णमास्यां तु सन्ध्याकालेऽप्युपस्थिते।
सङ्कल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहम्॥
स्नानं करिष्ये नियता ब्रह्मचर्यस्थिता सती।
भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम्॥"

इति भविष्यात्। व्यासपूजादौ त्वौदयिकी सार्द्धत्रिमुहूर्ता ग्राह्या,

"त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरप्रमाणयोः।"

इति विश्वेश्वरपद्धतावुक्तत्वात्। अत्रैव भारभूतेशाऽऽषाढीशयोः पूजा यात्रा च कार्या,

"उदीच्यां भारभूतेशमाषाढीशं समर्चयेत्।
कृत्वा सांवत्सरीं यात्रामनेना जायते नरः॥"

इति काशीखण्डात्। अस्यां शिवशयनमुक्तं हेमाद्रौ वामन-पुराणे—

"पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे।
वैयाघ्र्ये च जटाभारं समुद्ग्रथ्याऽहिचर्मणा॥" इति।

अत्र विष्णुशयनमप्युक्तं कल्पतरौ यमेन—

"क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः सम्पूजयेद्धरिम्॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति।
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः॥
प्रस्वापे च प्रबोधे च पूजितो येन केशवः॥" इति।

न चाषाढस्येयमेकादशी आषाढी, कार्त्तिकस्येयमेकादशी कार्त्तिकीति व्युत्पत्त्याऽऽषाढीकार्तिकीपदेन चाषाढकार्तिकयोरेकादशी ग्राह्येति वाच्यम्,

"आषाढशुक्लपक्षान्ते भगवान् मधुसूदनः।
भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात्॥"

इति विष्णुधर्मोत्तरे पक्षान्तग्रहणात्। न च "आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवम्" इति पूर्वोक्तस्कान्दविरोध इति वाच्यम्, देशभेदेन सम्प्रदायभेदेन च व्यवस्थासम्भवात्। अस्यामन्नादिदानं कार्यम्, "आषाढ्यामाषाढयुतायामन्नपानादिदानेनाक्षय्यमाप्नोति" इति विष्णूक्तेः।

अथ श्रावणपौर्णमासी पवित्रारोपणादौ पूर्वविद्धैव ग्राह्या, 'श्रावणी दुर्गनवमी' इति बृहद्यमोक्तेः ।

अस्यामुपाकर्म कार्यम्,

"अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।

हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥"

इति याज्ञवल्क्योक्तेः । 'अध्यायानाम्' वेदानाम् । "पञ्चम्यां हस्तेन युक्तायामुपाकर्म कार्यम्" इति हेमाद्रिमतम् । अपरे तु— "प्राञ्चो हस्तेन युक्तेऽहनि पञ्चम्यां वा" इति व्याचक्षते । स्मृत्यर्थसारे तु—

"श्रावणमासस्य श्रवणे वा पञ्चम्यां हस्ते पञ्चमीहस्तयोगे वा कार्यम्" इत्युक्तम् । ओषधीनां प्रादुर्भावाभावे वह्वृचकारिकायाम्—

"अवृष्ट्यौषधयस्तस्मिन् मासे तु न भवन्ति चेत् ।

तदा भाद्रपदे मासे श्रवणेन करोति तद् ॥" इति ।

एवं सूतकादिनाऽप्यन्तरिते भाद्रपदे श्रवणेन कार्यम् । तत्राप्यन्तरिते तु नोत्कर्षः, "वार्षिकमित्येतदाचक्षते" इति सूत्रे वार्षिकमिति समाख्याबलाद् । वर्षासु क्रियत इति वार्षिकम्, श्रावणभाद्रपदावेव वर्षा ऋतुः । अत्र श्रवणं धनिष्ठायुतं ग्राह्यम् तदाह व्यासः—

"धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेत् ।

तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ॥

श्रवणेन तु यत्कर्म ह्युत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥"

गर्गः—

"पर्वण्यौदयिके कुर्य्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥" इति ।

अत्र तैत्तिरीयपदं यजुर्वेदिमात्रपरम् । यदा श्रवणं पर्व वा ग्रहणसंक्रान्तिभ्यामन्वितम्, तदा पञ्चम्यामुपाकर्म्म कार्य्यम् । तदुक्तं मदनरत्ने स्मृत्यन्तरे—

"उपाकर्म न कुर्वन्ति क्रमात् सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥"

तथा—

"यदि स्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् ।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥" इति ।

अत्र विशेषं प्रयोगपारिजाते वृद्धमनुकात्यायनावाहतुः—

"यद्यर्द्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा ।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा ॥
अर्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं तदा ।
उपाकर्म्म न कुर्वीत परतश्चेन्न दोषकृत् ॥" इति ।

'परतश्चेत् परेऽहनि' इत्यपि क्वचित् पाठः । तदा परेऽहन्यपि निषेध इति समयमयूखे गुरवः ।

यत्तु वचनजातं—

"त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोः ॥
द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः ।
एकादश्यादितः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्डग्रहे तयोः प्रोक्त उभयत्र दिनत्रयम् ।"

इत्यादि पौर्णमासीव्यतिरिक्तदिनान्तरस्यापि सदोषत्वप्रतिपादक-कर्म्माद्यतिरिक्तकर्म्मविषयं बोध्यम्,

"नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥"

इति मदनरत्नधृतवचनात् ।

केचित्तु—

"वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके ॥"

इति वचनाद् बह्वृचानां सिंहार्क एवोपाकर्माऽऽहुः, तन्न, बह्वृचान्प्रति त्वनेन वचनेनाऽप्राप्तसिंहार्के विधीयमाने गौरव-प्रसङ्गात् । ननु तर्ह्येतस्य वचनस्य का गतिरिति चेच्छृणु, इदं हि वचनं सामगान् प्रति युक्तम् । तेषां हि—

"सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं स्वस्वच्छन्दसाम् ॥
शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम् ।"

इति गर्गवचनेन सिंहार्क एव तद्विधानात् ।

'छन्दोगाः' सामगाः । अधिमासे उपाकर्म न कार्यम्,

"उपाकर्म तथोत्सर्गः प्रसवाहोत्सवोऽष्टकाः ।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् ।।"

इति पराशरोक्तेः । 'परे' उत्तरे मासीत्यर्थः । 'प्रसवाहोत्सवः' जन्मदिनोत्सवो वर्द्धमानसंज्ञकः ।

"उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ।।"

इति कात्यायनवचनाच्च ।

यत्तु—

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहाषष्ट्योर्ह्येतदिष्टं वृषादितः ।।"

इति ऋष्यशृङ्गवचनं छन्दोगविषयम् । तेषां हि 'सिंहार्क एव' तदुक्तेरन्येषां सौरमासग्रहणे प्रमाणाभावात् ।

यस्तु गुरुभार्गवयोरिति वक्ष्यमाणसंग्रहवचने प्रथमोपाकर्मनिषेधः, स सामगविषय एव तेषां द्वितीयादिप्रयोगस्य सिंहरवौ मलमासे सति तत्रैव कर्त्तव्यत्वात् ।

कर्मपुराणे—

"श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम् ।।" इति ।

आषाढी तु बौधायनपरा, "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य" इति सूत्रात् । प्रौष्ठपदी हिरण्यकेशितैत्तिरीयाणाम्, सापि

यदा श्रावणीग्रहसंक्रान्तिसंयुक्ता तदैव नान्यथेति। अत्र तैत्तिरीयाणां प्रागुक्तमौदयिकं पर्व उदाजहार पाराशरीये गार्ग्यः—

"श्रावणीपौर्णमासी तु संगवात् परतो यदि।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्॥" इति।

अत्र पौर्णमासीति श्रवणहस्तयोरुपलक्षणम्। तेन तावपि सङ्गवस्पृष्टौ ग्राह्यौ।

तथा च पृथ्वीचन्द्रोदये—

"उदये संगवस्पर्शे श्रुतौ पर्वणि चाऽर्कभे।
कुर्य्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्॥" इति।

याजुषैः पूर्वाह्णे कार्यम्, "भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु" इति प्रचेतोवचनात्। छन्दोगैस्तु अपराह्णे कार्य्यम्,

"अध्यायानामुपाकर्म्म कुर्यात् कालेऽपराह्णिके।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः॥"

इति गोभिलोक्तेः। अत्र स्वस्वशाखोक्तो होमः कार्य्यः। अत्रऽर्षिपूजनतर्पणे आह कार्ष्णाजिनिः—

"उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य तु।
ऋषीन् दर्भमयान् कृत्वा पूजयेत् तर्पयेत् ततः॥" इति।

व्यासः—

"विष्टरं सप्तभिर्दर्भैर्द्वादशाङ्गुलिदैर्घिकम्।
चतुरङ्गुलमग्रं स्याद्ग्रन्थिमेकाङ्गुलिं तथा॥

प्रदक्षिणममुं कृत्वा ऋषीनावाह्य तर्पयेत् ।

ऋषीणामर्चनं सर्वं कर्त्तव्यञ्च निवीतिना ॥" इति ।

काष्र्णाजिनिः—

"वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् ।

नवयज्ञोपवीतानि हुत्वा दत्वा च धारयेत् ॥" इति ।

विष्णुः—

"उपाकर्मणि विप्रेभ्यो दद्याद् यज्ञोपवीतकम् ।

आयुष्मान् जायते तेन कर्मणा मानवो भुवि ॥" इति ।

ब्रह्मचारिणामत्र विशेषः कालादर्शे—

"मौञ्जीं यज्ञोपवीतञ्च नवं दण्डं च धारयेत् ।

अजिनं कटिसूत्रञ्च नवं वस्त्रं तथैव च ॥" इति ।

अत्र विशेषः स्वस्वसूत्रे ज्ञेयः । इदञ्च प्रथमोपाकर्म्मशुक्रास्ता-दावपि न कार्य्यम् । तदुक्तं संग्रहे—

"गुरुभार्गवयोर्मौढ्ये बाल्ये चार्द्धषिकेऽपि वा ।

तथाऽधिमाससंसर्पमलमासादिषु द्विजाः ॥

प्रथमोपाकृतिर्न स्यात् कृतकर्म्मविनाशकृत् ।" इति ।

मुहूर्तचिन्तामणावपि—

"व्याप्यारामतडागकूपभवनारम्भप्रतिष्ठे व्रता-

रम्भोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके ।

गोदानाग्रयणप्रपाप्रथमकोपाकर्म्मवेदव्रतं

नीलोद्वाहमथातिपन्नशिशुसंस्कारान् सुरस्थापनम् ॥

दीक्षामौञ्जिविवाहमुण्डनमपूर्वं देवतीर्थेक्षणं
संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकौ गमम् ।
चातुर्मास्यसमावृती श्रवणयोर्वेधं परीक्षां त्यजेद्
वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ॥" इति ।

अत्र नदीनां रजोदोषो नास्तीत्याह वसिष्ठः—

"उपाकर्मणि चोत्सर्गे व्रतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥"

अथाऽत्रवोत्सर्जनमुच्यते प्रसङ्गात् । तच्च पौषमासे रोहिण्यां कृष्णाष्टम्यां वा कार्य्यम्,

"पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥"

इति याज्ञवल्क्योक्तेः । कालान्तरमाह मनुः—

"पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥" इति ।

अत्र 'पूर्वाह्णे प्रथमेऽहनीति पुष्यमाघयोरपि सम्बध्यते' इति स्मृतिचन्द्रिकाकारादयो निबन्धकाराः । विज्ञानेश्वरस्तु 'पूर्वाह्णे इत्येव पदं पुष्यान्वयि, न तु प्रथमेऽहनीति याज्ञवल्क्येन कालान्तरोक्तत्वात्' इत्याह । असौ विकल्पो व्यवस्थितः ।

"श्रावण्यां प्रौष्ठपद्यां वा ह्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥"

इति मनुनैवोक्तत्वात् । एवं चायं विवेकः सम्पन्नः—

यदा हि श्रावण्यामुपाकर्म्म क्रियते तदा पौषशुक्लप्रतिपदि पूर्वाह्णे उत्सर्जनम्। यदा तु प्रौष्ठपद्यां तदा माघशुक्लप्रतिपदि पूर्वाह्णे इति। अर्द्धपञ्चमान् अर्द्धैः पञ्चम्यो येष्विति व्युत्पत्त्या सार्द्धचतुर इत्यर्थः। आश्वलायनास्तु माघ्यामेव कुर्य्युः।

"अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते।"

इति कारिकोक्तेः। उपाकर्म्मदिने वा कार्य्यम्,

"पुष्ये तूत्सर्जनं कुर्य्यादुपाकर्मदिनेऽपि वा।"

इति हेमाद्रौ खादिरगृह्योक्तेः। सामगास्तु सिंहस्थे सूर्य्ये पुष्यनक्षत्रे कुर्य्युः, 'सिंहे रवौ' इति प्रागुक्तवचनात्। यदा तु सिंहस्थे सूर्य्ये पूर्वे हस्त एव भवति तत्पूर्वः पुष्यस्तु कन्यास्थे रवौ, तदा तत्रैवोत्सर्जनं कृत्वा सिंहार्कहस्ते उपाकर्म्म कार्य्यम्,

"मासे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद् यदा।
तदा तु श्रावणे कुर्य्यादुत्सर्गं छन्दसां द्विजः॥"

इति कात्यायनवचनात्। प्रौष्ठपदश्रावणशब्दौ सौरमासपरौ, सामगानां सौरमासे एवोपाकर्मोत्सर्जनविधानात्। अत्रापि ऋषीन् पूजयेदित्युक्तं प्रागित्यलं प्रासङ्गिकेन। अस्यामाश्वलायनैः श्रवणाकर्म कार्य्यम्, "श्रावण्यां पौर्णमास्यां श्रवणाकर्म्म" इति सूत्रात्। सर्पबलिरप्यत्रैव कार्य्यः। इदञ्च कर्म्मद्वयं प्रदोषव्यापिन्यां पौर्णमास्यां कार्यम् "अस्तमिते स्थालीपाकं श्रपयित्वा" इति सूत्रात्। "इदं चाऽभुक्त्वैव कार्यम्" इति प्रयोगरत्नेऽस्मन्मातुः प्रपितामहचरणाः। "भुक्त्वा कार्यम्" इत्यपि केचित्।

अस्यामेव रक्षाबन्धनमुक्तं हेमाद्रौ भविष्योत्तरे—

"सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः ॥
विचित्रतन्तुग्रथितां बध्नीयाद् दक्षिणे करे ।"

मन्त्रः—

"येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन मन्त्रेण* बध्नामि रक्षे ! मा चल मा चल ॥" इति ।

तथा तत्रैव—

"यः श्रावणे विमलमासि विधानविज्ञो
रक्षाविधानमिदमाचरते मनुष्यः ।
आस्ते सुखेन परमेण स वर्षमेकं
पुत्रप्रपौत्रसहितः ससुहृज्जनश्च ॥" इति ।

अत्र सर्वेषामप्यधिकारस्तत्रैवोक्तः—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ।
कर्त्तव्यो रक्षिकाबन्धो द्विजान् सम्पूज्य यत्नतः ॥
अनेन विधिना यस्तु रक्षाबन्धनमाचरेत् ।
स सर्वदोषरहितः सुखं संवत्सरं वसेत् ॥" इति ।

इदं च भद्रायां न कार्यम् । तदुक्तं निर्णयामृते संग्रहे—

---

* 'तेन त्वां प्रतिबध्नामि' इत्यपि पाठः स्मर्यते । त्वामपीति निर्णयसिन्धौ ।

"भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥" इति ।

अस्यामेव हयग्रीवयात्रोक्ता कल्पतरौ ब्राह्मे—

"श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः ।
जगाद सामवेदं तु सर्वकल्मषनाशनः ॥
स्नात्वा संपूजयेरं तु शङ्खचक्रगदाधरम् ।" इति ।

अथ भाद्रपौर्णमास्यां नान्दीमुखश्राद्धमुक्तं ब्रह्मपुराणे—

"नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वराहवचनं यथा ॥" इति ।

नान्दीमुखास्त्वश्रुमुखेभ्यः परास्त्रयः । अश्रुमुखादिसंज्ञाप्युक्ता तत्रैव—

"पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्त्तिताः ॥
तेभ्यः परतरे ये तु ते तु नान्दीमुखाः स्मृताः ।" इति ।

अथाश्विनपौर्णमास्यामश्वयुजीकर्म्माग्रयणे कार्ये, "आश्वयुज्यमाश्वयुजीकर्म" इति सूत्रात् । "शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते" इति शौनकोक्तेः । अत्र प्रयोगादिविस्तरस्त्वस्मन्मातुः प्रपितामहभट्टश्रीनारायणपदपाथोजविरचिते प्रयोगरत्ने ज्ञेयः ।

अस्यामेव कोजागरव्रतमुक्तं लैङ्गे—

"आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्या लोकविभूतये ॥

कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतास्थितम् ।
नारिकेलोदकं पीत्वा अक्षैः क्रीडां समाचरेत् ॥
निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी ।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ॥"

इयं निशीथव्यापिनी ग्राह्या, तत्रैव जागराद्युक्तत्वात् ।

अत्र जागरणं प्रधानम्, फलसम्बन्धात् । अत्र घृतपात्र-दानं कार्यम्, "आश्वयुज्यामश्विनीगते चन्द्रे घृतपूर्णभाजनं सुवर्ण-युतं विप्राय दत्वा दीप्ताग्निर्भवति" इति निर्णयामृते विष्णूक्तेः । अथ कार्तिक्यां कार्त्तिकेयदर्शनमुक्तं काशीखण्डे—

"कार्त्तिक्यां कृतिकायोगे यः कुर्यात् स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥"

त्रिपुरोत्सवश्चाऽत्रैवोक्तो भविष्ये—

"पौर्णमास्यां तु सन्ध्यायां कर्त्तव्यस्त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण सुदीपांश्च सुरालये ॥
कीटाः पतङ्गा मशकाश्च वृक्षे
जले स्थले ये विचरन्ति जीवाः ।
दृष्ट्वा प्रदीपं नहि जन्मभागिन-
स्ते मुक्तरूपा हि भवन्ति तत्र ॥" इति ।

अत्र सन्ध्याकालव्यापिनी ग्राह्या, कर्मकालत्वात् । अस्यां क्षीर-सागरदानमुक्तं निर्णयामृते ब्रह्मपुराणे—

"पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा।
ततः चन्द्रोदये पूज्यास्तापस्यः कृतिकास्तु षट् ॥
कार्त्तिकेयस्तथा खड्गी वरुणश्च हुताशनः।
धान्यैः सशूकैर्गृहं संभूषितव्यं निशागमे ॥
माल्यैर्धूपैस्तथा दीपैर्भक्ष्यैरुच्चावचैस्तथा।
परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः ॥
एवं देवांस्तु सम्पूज्य दीपो देयो गृहाद्बहिः।
दीपोपान्ते तथा गर्त्तश्चतुरस्रो मनोहरः।
चतुर्विंशांगुलः कार्यः सिक्तश्चन्दनवारिणा।
गन्धक्षीरेण सम्पूर्णः स सम्यक् परिपूजितः ॥
तत्र हेममयो मत्स्यो मुक्तानेत्रमनोहरः।
प्रक्षेप्तव्यो विधानेन नमोऽस्तु हरये पठन् ॥
ब्राह्मणायाऽथ योग्याय दद्यात्तं क्षीरसागरम् ।" इति ।

अत्रैव वृषोत्सर्ग उक्तो भविष्योत्तरे—

"कार्त्तिक्यां तु वृषोत्सग कृत्वा नक्तं समाचरेत् ।
शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ॥" इति ।

अस्यामेव कार्त्तिकस्नायिनां कार्त्तिकोद्यापनविधिरुक्तः पाद्मे—
"नारद उवाच—

अथोर्जव्रतिनः सम्यगुद्यापनविधिं नृप ! ।
तं शृणुष्व मया ख्यातं सविधानं विशेषतः ॥

ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती ।
व्रतसम्पूर्णतार्थाय विष्णुप्रीत्यर्थमेव च ॥
तुलसीमूलदेशे तु सर्वतोभद्रमेव च ।
पञ्चभिः वर्णकैः सम्यक् शोभाढ्यं समलङ्कृतम् ॥
तस्योपरि सपिधानं पञ्चरत्नसमन्वितम् ।
महाफलेन संयुक्तं कुम्भं तत्र निधाय च ॥
पूजयेत्तत्र देवेशं शङ्खचक्रगदाधरम् ।
कौशेयपीतवसनं युक्तं जलधिकन्यया ॥
इन्द्रादिलोकपालांश्च मण्डयेत् पूजयेत् व्रती ।
द्वादश्यां प्रतिबुद्धोऽसौ त्रयोदश्यां यतः सुरैः ॥
दृष्टोऽर्चितश्चतुर्दश्यां तस्मात् पूज्यस्तिथाविह ।
तस्यामुपवसेद् भक्त्या शान्तः प्रयतमानसः ॥
पूजयेद् देवदेवेशं सौवर्णं गुर्वनुज्ञया ।
उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः ॥
रात्रौ जागरणं कुर्याद् गीतवाद्यादिमङ्गलैः ।
ततश्च पौर्णमास्यां च सपत्नीकान् द्विजोत्तमान् ॥"
"त्रिंशन्मितांस्तथैवैकं स्वशक्त्या वा निमन्त्रयेत् ।
अतो देवा इति द्वाभ्यां जुहुयात् तिलपायसम् ॥
प्रीत्यर्थं देवदेवस्य देवानाञ्च पृथक् पृथक् ।
दक्षिणां च यथाशक्त्या प्रदद्यात् प्रणमेच्च तान् ॥
गुरुं व्रतोपदेष्टारं वस्त्रालङ्करणादिभिः ।

सपत्नीकं समभ्यर्च्य तांश्च विप्रान् क्षमापयेत् ॥
युष्मत्प्रसादाद् देवेशः प्रसन्नो मम सर्वदा ।
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ॥
तत्सर्वं नाशमायातु स्थिरा मे चाऽस्तु सन्ततिः ।
मनोरथाश्च सफलाः सन्तु नित्यं तवाऽर्चनात् ॥
देहान्ते परमं स्थानं प्राप्नुयामतिदुर्लभम् ।
इति क्षमाप्य तान् विप्रान् प्रसाद्य च विसर्जयेत् ॥
कार्त्तिके वाऽथ तपसि विधिरेवं विधो मतः ॥"

इति कार्त्तिकेयोद्यापनविधिः। अथ मार्गशीर्ष्यां प्रत्यवरोहण-मुक्तम्, तत् प्रयोगरत्ने द्रष्टव्यम् । अत्र विशेषो विष्णुस्मृतौ— "मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरोयुक्तायां चूर्णितलवणस्य सुवर्ण-नाभं प्रस्थमेकं ब्राह्मणाय प्रतिपादयेत् । तेन कर्मणा रूपसौभाग्य-लाभो जयः" इति ।

अथ पौष्यां विशेषो ब्रह्मपुराणे—

"इदं जगत् पुरा लक्ष्म्या व्यक्तमासीत्ततो हरिः ।
पुरन्दरश्च सोमश्च तथा पुष्यबृहस्पती ॥
पञ्चैते पुष्ययोगेन पौर्णमास्यां तपोबलात् ।
अलङ्कृतं पुनश्चक्रुः सौभाग्योत्सवकेलिभिः ॥
तस्मान्नरः पुष्ययोगे तत्र सौभाग्यवृद्धये ।
गौरसर्षपकल्केन समालभ्य स्वकां तनुम् ॥

कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परम् ।
उद्वर्त्य देवश्च तथा सर्वौषधियुतैर्जलैः ॥
स्नापयित्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः ।
यष्टव्यं मङ्गलशतं धूपं स्रङ्माल्यशोभितम् ॥
ततो नारायणं शक्रश्चन्द्रं पुष्यबृहस्पती ।
सम्पूज्य धूपपुष्पैश्च नैवेद्यैश्च पृथक् पृथक् ॥
प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाऽग्निहवनं तथा ।
धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैश्च शोभितान् ॥
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् ।" इति ।

अथ माघ्यामन्नदानान्युक्तानि भविष्योत्तरे—

"माघ्यां मघासु च तिलैः सन्तर्प्य पितृदेवताः ।
तिलपात्राणि देयानि तिलैः सपललोदनम् ॥
कार्पासदानमत्रैव तिलदानन्तु शस्यते ।
कम्बलाजिनरत्नानि कञ्चुकौ पापमोचकौ ॥
उपानद्दानमत्रैव कथितं सर्वकामदम् ।
यत्र वा तत्र वा स्नानं दानं वित्तानुरूपतः ॥"

तथा तत्रैव—

"पौर्णमास्यान्तु यो माघे पूजयेद्विधिवच्छिवम् ।
सोऽश्वमेधमवाप्येह विष्णुलोके महीयते ॥"-इति ।

अस्यामेव माघस्नानोद्यापनं कार्य्यम् । तद्विधिस्तु—

"कार्त्तिकेवाऽथ तपसि विधिरेवंविधो मतः ॥"

इति नारदवचनात् कार्त्तिकोद्यापनवद् ज्ञेयः ।

अथ फाल्गुनपौर्णमास्यां होलिकापूजनमुक्तं भविष्ये—

"तपस्यपूर्णिमायान्तु रजन्यां होलिकोत्सवः ।" इति ।

तत्र पौर्णमासी प्रदोषव्यापिनी ग्राह्या ।

तदाह चन्द्रप्रकाशे नारदः—

"प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।

तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥" इति ।

प्रदोषस्त्रिमुहूर्त्तात्मकः । यदा तु दिनद्वये प्रदोषव्यापिनी तदोत्तरा, पूर्वदिने भद्रारहितकालाभावात् । तथा च निर्णयामृतमदनरत्नयोः पुराणसमुच्चये—

"भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै ।

नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् ॥" इति ।

यदा पूर्वदिने प्रदोषव्यापिनी, परदिने प्रदोषेऽभावः, तदा तु पूर्वदिने भद्रां विहाय कार्या,

"राकायामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत् ।

होला भद्रावसाने तु होलिकां तत्र दीपयेत् ॥"

इति भविष्योत्तराच्च । यदा पूर्वदिने प्रदोषव्याप्तिर्न तत्सान्त्वना । अथ च भद्रारहितः कालो न लभ्यते, उत्तरदिने च प्रदोषे पूर्णिमाभावस्तदा भद्रापुच्छे कार्या,

"पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि तु ।

तानि सर्वाणि सिद्ध्यन्ति विष्टिपुच्छे न संशयः ॥"

इति लल्लोक्तेः। विष्टिपुच्छमुक्तं ज्योतिःशास्त्रे—

"पञ्चद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा
विष्टेरास्यमसद्गजेन्दुरसरामाद्र्यश्विबाणाब्धिषु।
यामेष्वन्त्यघटीत्रयं शुभकरं पुच्छं तथा वासरे
विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्द्धजा॥"

अस्यार्थः—शुक्लकृष्णपक्षयोश्चतुर्थ्यष्टम्येकादशीपौर्णमासीतृतीयासप्तमीचतुर्दशीषु क्रमेण पञ्चमद्वितीयसप्तमचतुर्थाष्टमतृतीयषष्ठप्रथमप्रहराणां प्रथमघटीपञ्चकं भद्रामुखम्, तदशुभम्, आस्वेव तिथिष्वष्टमप्रथमषष्ठतृतीयसप्तमद्वितीयपञ्चमचतुर्थप्रहरेष्वन्तिमं घटीत्रयं भद्रापुच्छम्, तच्छुभम्; शेषं स्पष्टमिति। यदा त्वस्मिन्नेव विषये उत्तरदिने सार्द्धयामत्रयमिता ततोऽधिका वा पौर्णमासी प्रतिपदश्चापरेऽह्निवृद्धिस्तदा पौर्णमास्युत्तरमपि प्रतिपत्प्रदोष एव होलिका कार्या, न पूर्वेऽह्नि विष्टिपुच्छे। तदुक्तं भविष्ये—

"सार्द्धयामत्रयं पूर्णा द्वितीये दिवसे यदा।
प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता॥" इति।

यत्तु वचनम्—"वह्नौ वह्निं परित्यजेत्" इति, वह्नौ होलिकायां वह्निं प्रतिपदं वर्जयेदित्यर्थः, तदेतत् सायङ्काले भद्रारहितपौर्णमासीलाभेऽपि तामतिक्रम्य प्रतिपदि न कर्त्तव्यमित्येतत्परत्वेनेयम्, भविष्यवाक्यस्य निरर्थकताभीतेः। यदा पूर्वरात्रि-

भद्रान्विता, उत्तरेऽह्नि प्रदोषे ग्रस्तोदयात्मकं चन्द्रग्रहणम्, तदा स्नात्वा होला कार्या,

"स्नात्वा कर्म्माणि कुर्वीत शृतमन्नं विवर्जयेत्" ।

इति वाक्यात्। अत्र कृत्यं हेमाद्रौ भविष्ये—

"सञ्चयं शुष्ककाष्ठानामुपलानाञ्च कारयेत् ।
तत्राग्निं विधिवद् हुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः ॥"

पूजामन्त्रस्तु—

"असृक्पाभयसंत्रस्तैः कृता त्वं होलि ! बालिशैः ।
अतस्त्वां पूजयिष्यामि भूते ! भूतिप्रदा भव ॥" इति ।

फाल्गुनो मलमासश्चेच्छुद्धे मासि होला कार्या,

"स्पष्टमासविशेषाख्याविहितं वर्जयेद् मले ।"

इति नारदवचनात्। इयमपि मन्वादिरित्युक्तं प्राक्। अत्रापि दोलोत्सव उक्तः कृत्यचिन्तामणौ ब्राह्मे—

"नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥"इति ।

पौर्णमासी गुरुवारेण सिद्धा, मन्देन विरुद्धा । योगिन्यत्र वायव्यामिति पौर्णमासीनिर्णयः ।

इति श्रीमद्विद्वच्छिरोमणिभारद्वाजमहादेवभट्टात्मज-
सकलविद्यानिधानदिवाकरविरचिते तिथ्यर्के
षोडशतिथीनां निर्णयः
समाप्तः ॥

## अथेष्टिकालनिर्णयः

तत्रेष्टिः पर्वप्रतिपत्सन्धौ कार्या। तदुक्तं माधवीये गोभिलेन—"पक्षान्ता उपवस्तव्याः पक्षादयो यष्टव्याः सन्धिमभितो यजेत्" इति। उपवासोऽन्वाधानम्। सन्धेः सूक्ष्मत्वात् तत्र यागानुष्ठानस्य बाधात् तत्सामीप्यं विषयः। तदाह माधवीये बौधायनः—

"सूक्ष्मत्वात् सन्धिकालस्य सन्धिर्विषय उच्यते।
सामीप्यं विषयं प्राहुः पूर्वेणाप्यपरेण च॥"

अत्र पूर्वापरशब्दाभ्यां सन्धेः प्राचीनं पर्वदिनं प्रतीचीनं प्रतिपद्दिनमुच्यते। तत्र पूर्वस्मिन् पर्वदिनेऽन्वाधानादिरूपो यागारम्भः कार्यः। अपरस्मिन् प्रतिपद्दिने स्विष्टकृदादिस्तेमरूपा यागसमाप्तिः कार्या। तथा च तैत्तिरीयब्राह्मणश्रुतिः—"पूर्वे ुरिध्मावर्हिः करोति यज्ञमेवारभ्य गृहीत्वोपवसति" इति। शतपथेऽपि—"पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजति" इति। अन्वाधानयागयोः कालमाह लौगाक्षिः—

"त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि॥" इति।

प्रतिपत्पर्वणोरन्त्यौ द्वावंशौ यथाक्रमं यागान्वाधानयोस्त्याज्याविति भावः। तानिमान् यागस्य चतुरोंऽशान् विवृणुतो माधवीये यज्ञपार्श्वशातातपौ—

"पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः ।
कालः पार्वणयागे स्यादथान्तेषु न विद्यते ॥
पर्वणो यश्चतुर्थोंऽश आद्या प्रतिपदस्त्रयः ।
यागः कालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥" इति ।

अत्र 'प्रातरिति विशेषणात् सूर्योदयस्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति' इति माधवः । प्रतिपदश्चतुर्थांशं निषेधति तत्रैव कात्यायनः—

"न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥" इति ।

एवं निर्णीतेऽर्थे पर्वप्रतिपदोः सम्पूर्णत्वे न कश्चिदपि सन्देहः । खण्डत्वे तु तयोर्निर्णयमाह माधवीये गोभिलः—

"आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥
पर्वप्रतिपदोः सन्धिरर्वागावर्त्तनाद् यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ॥
आवर्त्तनात् परः सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येव पर्वद्वयविनिश्चयः ॥" इति ।

आवर्त्तनो मध्याह्नः । अत्र सन्धिश्च प्रतिपदो ह्रासवृद्ध्योरर्द्धं पर्वणि वियोज्य संयोज्य ज्ञेयः । तदाह कात्यायनः—

"परेऽह्नि घटिकान्यूनास्तथैवाभ्यधिकाश्च याः ।
तदर्द्धक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ॥" इति ।

लौगाक्षिरपि—

"तिथेः परस्याः घटिकास्तु याः स्यु-
न्र्यूनास्तथैवाभ्यधिकाश्च तासाम् ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ॥" इति ।

तथा च प्रतिपदो ह्रासे यावान् ह्रासस्तदर्द्धं पूर्वस्मात् पर्वदिनान्निष्काश्यैवं प्रतिपद्वृद्धौ वृद्धिनाडिकार्द्धं पूर्वस्मिन् पर्वदिने संयोज्य सन्धिः कल्पनीय इत्यर्थः ।

अत्र प्रतिपदो ह्रासवृद्धी पर्वभोगमादाय ज्ञेये । तथाहि—यदा चतुर्दशी दशघट्यात्मिका, पर्व च दशघट्यात्मकम्, प्रतिपदेकोनविंशतिघट्यात्मिका, तदा प्रतिपदो ह्रासः । यदा चतुर्दशी पञ्चविंशतिघट्यात्मिका, पर्व एकोनविंशतिघट्यात्मकम्, प्रतिपच्चतुर्दशघट्यात्मिका, तदा वृद्ध्युदाहरणम् । एवमादीन्युदाहरणानि बोद्धव्यानि ।

अपराह्णे सन्धौ वृद्धशातातपः—

"सन्धिर्यत्रापराह्णे स्याद् यागः प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥" इति ।

यश्च

"न यष्टव्यं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित् ।"

इति कात्यायनवचनात् प्रतिपच्चतुर्थभागे यागनिषेधः, स मध्याह्नसन्धिविषये यागकाले सत्यालस्यादिना तमतिक्रम्य चतुर्थेऽशे न

यष्टव्यमित्येवं बोध्यः । [यदा ?] अमायां चन्द्रदर्शो भवति, दिने यागकरणे प्रायश्चित्तविशेषमाह कात्यायनः—

"यजनीयेऽह्नि सोमश्चेद् वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद् द्विजातये ॥" इति ।

वृद्धवसिष्ठशातातपावपि—

"आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदयाद्यदि ।
प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदा ॥"

'अस्तमिते' अस्तासन्ने इति श्रीगुरवः । अतिपत्तिर्यागस्यान-नुष्ठानम्,

"द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्निकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥"

इति सोमदर्शननिषेधाच्च ।

"अर्वागस्तमयाद्यत्र द्वितीया तु प्रदृश्यते ।
तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥" इति ।

अयं सोमदर्शननिषेधस्तु कात्यायनबौधायनपरो नाश्वलायना-पस्तम्बानाम्, "यस्मिन्नहनि पुरस्तात् पश्चात् सोमो न दृश्येत तदहर्यजेत" इति श्रुतेः ।

"द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्निकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥"

इति बौधायनवचनाच्च ।

आश्वलायनापस्तम्बैस्तु "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्निमाँल्लोकान् उदेति" इति श्रुत्या चन्द्रदर्शनोपेतायामपि प्रतिपदीष्टेराम्नानात् सोमदर्शनवत्यपि काले कार्य्या ।

यत्तु—

"पर्वणोंऽशे चतुर्थे तु कार्या नेष्टिर्द्विजोत्तमैः ।
द्वितीयासहितं यस्माद् दूषयन्त्याश्वलायनाः ॥"

इति स्मृतिवाक्यं सर्वद्विजानामविशेषेण द्वितीयायुक्तप्रतिपदि यागनिषेधकम्, तदावर्त्तनादर्वाक् पर्वप्रतिपत्सन्धौ बोध्यम् ।

इष्टिसमाप्तिश्च प्रतिपन्मध्य एव कार्या न पर्वान्ते,

"प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्त्तव्या यागवित्तमैः ॥"

इति गार्ग्यवचनात् । कदाचित् पौर्णमास्यां विशेषमाह कात्यायनः—

"सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥" इति ।

एतदपि वैकल्पिकं न नियतम्, "पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायां सर्वं क्रियते" इत्यापस्तम्बस्मरणात् ।

अत्र याज्ञिकास्तु—

"आधानानन्तरा पौर्णमासी चेन्मलमासगा ।
तस्यामारम्भणीयादीन् न कुर्यात्तु कदाचन ॥"

इति त्रिकाण्डमण्डनवचनाद् विघ्नेष्टिं कृत्वा शुद्धकाले एवारम्भं कुर्वीतेत्याहुः। प्रयोगपारिजातकारस्तु—

"यद्यारम्भकाले मलमासगुरुशुक्रास्तबाल्यवार्द्धकग्रहणपौषमासादि भवति तदापि प्रारम्भः कार्य एव। यानि तु तत्रारम्भनिषेधकानि—

"उपरागोऽधिमासश्च यदि प्रथमपर्वणि।
तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा।"

इति संग्रहवचनानि, तान्यालस्यादिना स्वकालानुपक्रान्तेष्टिस्थालीपाकविषयाणि,

"नामकर्म च दर्शेष्टिं यथाकालं समाचरेत्।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे॥"

इत्यपरार्कस्थगर्गवचनाद्"—इत्याह। अयमेव पक्षोऽस्मन्मातृप्रपितामहश्रीजगद्गुरुभट्टश्रीनारायणपदपाथोजैः प्रयोगरत्ने आदृतः। इति प्रकृतीष्टेः कालो निरूपितः॥

अथ विकृतिकालः। आपस्तम्बः—"यदीष्ट्या यदि पशुना यदि सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत" इति। प्रकृतिर्दर्शपौर्णमासौ। "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादिकाः काम्येष्टयो विकृतयः। तत्र "प्रकृतिवद् विकृतिः कर्त्तव्या" इति न्यायेन विकृतीनामपि कदाचित् सन्धिदिनोत्तर-

दिनेऽनुष्ठानं प्राप्येत, तदेतदुदाहृतापस्तम्बवचनेन न्यायं बाधित्वा वार्यते। प्रकृतिविकृतेः सन्निपाते निर्णयमाह कात्यायनः—

"आवर्तनात् प्राग् यदि पर्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः।
तदैव यागः परतो यदि स्यात्तस्मिन्
विकृत्याः प्रकृतेः परेद्युः ॥" इति।

पशौ कालमाह—

"अर्द्धादह्नो भवति नियतः पर्वसन्धिः परस्तात्
कृत्वा तस्मिन्नहनि तु पशुं सद्य एव द्व्यहं वा ॥
आरभ्याथ प्रकृतिरथ चेत् पर्वसन्धिः पुरस्तात्
कृत्वा तस्मिन् प्रकृतिमथ तु स्यात् पशुः सद्य एव ॥" इति।

आग्रयणकालानाह आपस्तम्बः—

"वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैः" इति।

सम्पूर्णे दर्शे साग्नेः क्रममाह लौगाक्षिः—

"पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः।
पितृयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः॥" इति।

'पक्षान्तं कर्म्म' अन्वाधानकर्म्म। 'अन्वाहार्यकम्' दर्शश्राद्धम्। इति सङ्क्षेपः। अथ ग्रहणं निर्णीयते। माधवीये वृद्धगार्ग्यः—

"पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम्।
ग्रसते चन्द्रमर्कश्च दर्शप्रतिपदन्तरे ॥" इति।

तत्र यस्मिन् यामे चन्द्रग्रहणम्, तस्माद् यामात् पूर्वप्रहरत्रयं न भुञ्जीत,

"ग्रहणन्तु भवेदिन्दोः प्रथमादधि यामतः ।
भुञ्जीतावर्त्तनात् पूर्वं प्रथमे प्रथमादधः ॥"

इति मार्कण्डेयवचनात् । 'अधि' ऊर्ध्वम् । 'आवर्त्तनाद्' मध्याह्नात् । एवं सूर्यग्रहणे यस्मिन् यामे ग्रहणम्, तस्माद्यामात् पूव चतुरो यामान् भोजने विवर्जयेत्,

"सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥"

इति वृद्धगौतमोक्तेः । बालवृद्धातुराणां ग्रहणयामात् पूर्वमेको यामो भोजने निषिद्धः,

"सायाह्ने ग्रहणञ्चेत् स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं तु भुजिक्रिया ।"

इति मार्कण्डेयोक्तेः । कदाचिच्चन्द्रग्रहे विशेषमाह माधवीये वृद्धवसिष्ठः—

"ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।" इति ।

सूर्याचन्द्रमसोर्ग्रस्तास्ते तु तत्रैव व्यासो विशेषमाह—

"अमुक्तयोरस्तगयोरद्याद् दृष्ट्वा परेऽहनि ।" इति ।

चन्द्रग्रस्तास्ते द्वितीयदिने भोजननिषेधः । न तु सन्ध्या-स्नानादावित्याह उशनाः ।

"ग्रस्ते चास्तंगते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम् ।
स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः ॥" इति ।

क्वचित्तु 'स्नात्वा पाकादिकं कार्यम्' इति तृतीयश्चरणः । इन्दुपदं रवेरुपलक्षणम् । तेन सायं सन्ध्यादिसिद्धिः । हेमाद्रौ षट्त्रिंशन्मते—

"सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥"

'शृतम्' पाचितम् । ग्रहणात् पूर्वं पाचितं ग्रहणोत्तरं न भोक्तव्यमिति भावः । शृतान्नसंसर्गित्वात् तत्पात्राणामपि क्षालनं त्यागश्च । केषुचित् प्रतिप्रसवो वचनान्तरे—

"आरनालं च तक्रं चाद्यादेवं घृतपाचितम् ।
उदकञ्च कुशच्छन्नं न दुष्येद्राहुदर्शने ॥" इति ।

कुशच्छन्नमिति सर्वत्रान्वेति । ग्रहणे होमादिस्मार्तकर्म कुर्वीत,

"स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।"

इति वचनात् । वेधकाले ग्रहणे वा भोजने प्रायश्चित्तं माधवीये कात्यायन आह—

"चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति ॥" इति ।

वेधे भोजने त्रिरात्रोपोषणात् शुद्धिरित्यर्थः । चन्द्रग्रहे रात्रावपि स्नानदानादिकार्यमित्याह देवलः—

"यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥" इति ।

दानान्युक्तानि भारते—

"भूमिर्गावः सुवर्णं च धान्यं वा यद्यदीप्सितम् ।
तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता ॥"

एतद्दानं सत्पात्रे देयमित्युक्तं तत्रैव—

"अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणाम् ॥" इति ।

पात्रलक्षणमाह याज्ञवल्क्यः—

"न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥" इति ।

वृत्तमाह शैानकः—

"सत्यं शैाचं क्षमा धैर्यं वृत्तमित्यभिधीयते ।"

एतादृशपात्रालाभे बैाधायनः—

"श्रोत्रियोऽश्रोत्रियो वापि पात्रं वाऽपात्रमेव वा ।
विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हति ॥" इति ।

हेमाद्रौ व्यासः—

"सूर्यवारे रविग्राहः सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातस्तत्रानन्तफलं लभेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ।
तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम् ॥" इति ।

शातातपः—

"सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम् ॥" इति ।

आशौचिनोऽपि ग्रहणे स्नानमुक्तं वृद्धवसिष्ठेन—

"सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥"

शुद्धिरित्युक्तेराशौचिनो दानमपि भवति । रजस्वलाया विशेषो मिताक्षरायाम्—

"स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ।" इति ।

'व्रतम्' रजस्वलाधर्मरूपम् । ग्रहणे पुण्यकालमाह जाबालिः—

"संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरे ॥" इति ।

'दर्शनम्' शास्त्रीयं ज्ञानम् । तथा च यावत्कालपर्यन्तं शास्त्रेण ग्रहणं ज्ञायते, तावत्कालः पुण्यसमय इति भावः । नन्वेवं सति द्वीपान्तरग्रहणेऽपि स्नानदानप्रसङ्ग इति वाच्यम्,

"सूर्यग्रहो यदा रात्रौ दिवा चन्द्रे ग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न तु क्वचित् ॥"

इति षट्त्रिंशन्मते तस्य निषेधात् । मेघाद्याच्छिन्ने मोक्षस्नानमपि शास्त्रेण मुक्तिं विज्ञाय कार्यम्,

"चन्द्रसूर्यग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः ।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम् ॥"

इति वृद्धगौतमेन विज्ञायेति सामान्यतोऽभिधानात् । एतेन चाक्षुषदर्शनमेव स्नाननिमित्तमिति ब्रुवन्तो निरस्ता वेदितव्याः । हेमाद्रौ शातातपः—

"ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने श्राद्धदाने मुक्ते स्नानं विधीयते ॥ इति ।

तथा च ग्रस्यमाने स्नानमकुर्वन्तो गौडा भ्रान्ता एव । ब्रह्मवैवर्त्ते—

"विमुक्ते यदि न स्नायाच्चन्द्रसूर्यग्रहे तथा ।
तस्य तावदशौचं स्याद् यावदन्यः परो ग्रहः ॥" इति ।

अत्र स्नानं गङ्गादिमहानदीषु कार्यम् । तदुक्तं महाभारते—

"गङ्गास्नानं प्रकुर्वीत ग्रहणे सोमसूर्ययोः ।
महानदीषु सर्वासु स्नानं कुर्याद् यथाविधि ॥" इति ।

महानद्यो ब्राह्मे दर्शिताः—

"गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका चतस्रश्च विन्ध्यस्योत्तरस्तथा ॥" इति ।

महानद्यभावे शङ्ख आह—

"वापीकूपतडागेषु गिरिप्रस्रवणेऽपि च ।
नद्यां नदे देवखाते सरसीषूद्धताम्बुनि ॥
उष्णोदकेन वा स्नायाद् ग्रहणे सोमसूर्ययोः ।"

उष्णोदकमातुरस्येत्याह व्याघ्रः—

"आदित्यकिरणैः पूतं पुनः पूतं च वह्निना ।
अतो व्याध्यातुरः स्नायाद् ग्रहणेऽप्युष्णवारिणा ॥"इति ।

एतेन वारणं स्नानं मुख्यम्, तदभावे नित्यवदाग्नेयाद्यपि कार्य-मिति सूचितम् । व्यासः—

"सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमाः द्विजाः ।
सर्वं भूमिसमं दानं ग्रहणे सोमसूर्ययोः ॥" इति ।

क्षेत्राणि देवीपुराणे—

"गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा ।
कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे ॥" इति ।

अत्र श्राद्धं कार्यम्—

"सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति ॥"

इति वचनात् । तन्मुच्यमानकाले कार्यमित्युक्तं प्राक् । तच्चो-पवासवता कार्यमिति विवेचनकारः । भुक्त्वापि कार्यमित्यपरे ।

शिवरहस्ये—

"सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम् ।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥" इति ।

जन्मनक्षत्रराश्यादौ स्थितरविसोमग्रहणे दोष इत्युक्तं ज्योतिःशास्त्रे—

"त्रिषड्दशायोपगते नराणां
शुभप्रदं स्याद् ग्रहणं रवीन्द्वोः ।
द्विसप्तनन्देषु च मध्यमं स्या-
च्छेषेष्वनिष्टं कथितं मुनीन्द्रैः ॥" इति ।

विष्णुधर्मोत्तरे—

"सूर्यस्य संक्रमो वापि ग्रहणं शशिसूर्ययोः ।
यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा मृतिः ॥

'त्रिजन्मनक्षत्राणि' जन्मदशमैकोनविंशतिः ।

होरायां ग्रस्यते यस्य नक्षत्रे वा निशाकरः ।
प्राणसन्देहमाप्नोति स वा मरणमृच्छति ॥
यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ ।
तज्जनानां भवेत्पीडा ये नराः शान्तिवर्जिताः ॥

'होरा' जन्मलग्नम् ।

तस्य दानं च होमं च देवार्चनजपौ तथा ।
उपरागाभिषेकं च कुर्याच्छान्तिर्भविष्यति ॥
स्वर्णेन वाऽथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् ।
ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः ॥"

'सर्पस्य' तदाकारस्य राहोरित्यर्थः । ज्योतिःसागरे—

"सौवर्णं कारयेन्नागं पलेनाथ पलार्द्धतः ।
तदर्द्धेन तदर्द्धेन फणायां मौक्तिकं न्यसेत् ॥
ताम्रपात्रे निधायाऽथ घृतपूर्णे विशेषतः ।
कांस्ये वा कान्तिलोहे वा न्यस्य दद्यात् सदक्षिणम् ॥
सौवर्णं राजतं वापि विम्बं कृत्वा स्वशक्तितः ।
उपरागभवक्लेशच्छिदे विप्राय दापयेत् ॥"

मन्त्रस्तु—

"तमोमय ! महाभाग ! सोमसूर्यविमर्दन ! ।
हेमताराप्रदानेन मम शान्तिप्रदो भव ॥
विधुन्तुद ! नमस्तुभ्यं सिंहिकानन्दनाच्युत ! ।
दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ॥" इति ।

उपरागाभिषेकश्च—

"यस्य राशिं समासाद्य भवेद् ग्रहणसम्भवः ॥"

इत्यादिना ग्रन्थेन मत्स्यपुराणाभिहितः श्रीमातामहगुरुचरणकृतशान्तिमयूखे द्रष्टव्यः ।

दुष्टग्रहणदोषनाशकं सर्वौषधिस्नानमुक्तं ग्रन्थान्तरे—

"सिद्धार्थकुष्ठरजनीद्वयलोध्रमुस्ता
लामज्जकै ( शै ? )लफलिनीमुरमांसियुक्ताः ।
स्नानं हितं ग्रहणदोषविनाशनाय
सर्वे ग्रहा रविमुखा बलिनो भवन्ति ॥"

'लामज्जकम्' उशीरभेदः, 'फलिनी' प्रियङ्गुरिति दिक् ।

अथ पक्षः । विष्णुपुराणे—

"त्रिंशन्मुहूर्तं कथितमहोरात्रं तु यन्मया ।
तानि पञ्चदश ब्रह्मन् ! पक्ष इत्यभिधीयते ॥"

स च द्वेधा, शुक्लकृष्णभेदात् । दैवे कर्मणि शुक्लपक्षः, पित्र्ये कर्मणि कृष्णपक्षो ग्राह्यः,

"दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते ।"

इति माधवलिखितश्रुतेः ।

अथ मासनिर्णयः । 'मस' परिमाणे इत्यस्माद्धातोर्निष्पन्नस्य मासशब्दस्यार्थो मस्येते परिमीयेते यावता कालेन चन्द्रवृद्धिक्षयौ स कालो मास इति । स मासस्त्रिधा, चांद्रसावनसौरभेदात् । चान्द्रादीनां स्वरूपं माधवीये ब्रह्मसिद्धान्ते—

"चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥" इति ।

माधवमदनरत्नयोर्नाक्षत्रमपि केचिदिच्छन्तीत्युक्तम्,

"सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते ।"

इति विष्णुधर्मोत्तरात् ।

स च सप्तविंशतिभिः (त्या ?) दिनैः सम्पद्यते,

"माने मासस्तु नाक्षत्रे सप्तविंशतिभिर्दिनैः ।"

इति स्मृतेः । कुत्र को वा मासो ग्राह्य इत्याकाङ्क्षायां गर्गः—

"सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।

आब्दिके पितृकार्ये च चान्द्रो मासः प्रकीर्तितः ॥" इति ।

"आब्दिके सांवत्सरिकमृताहश्राद्धे, पितृकार्ये षाण्मासिकश्राद्धादौ, चशब्दान्माससंवत्सरसाध्ययज्ञव्यतिरिक्ते सर्वस्मिन् देवकार्ये चान्द्रो मासः प्रशस्यते इत्युक्तम्" इति हेमाद्रिः। उक्तश्च पितामहेन–

"दैवे कर्मणि पित्र्ये च मासश्चांद्रमसः स्मृतः ।" इति ।

विप्राणान्तु मुख्यश्चान्द्र एव,

"अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।

संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥"

इति ब्रह्मसिद्धान्तात् । नाक्षत्रमासस्योपयोगस्त्वायुर्दीर्घनिर्णयः । माधवस्तु—"अमावास्यया हि मासान् सम्पश्यन्ति, पौर्णमास्या हि मासान् सम्पश्यन्ति" इति श्रुत्या दर्शान्तत्वपूर्णिमान्तत्वयोः साम्याद्नुष्ठानादिषु विशेषवचनाच्छिष्टाचाराच्च व्यवस्थेत्युदाजहार । दर्शान्तानां पूर्णिमान्तानां वा मासविशेषाणां कार्त्तिकादिसंज्ञा नक्षत्रयोगाद् । यत्र मासे पूर्णिमा कृत्तिकानक्षत्रेण युज्यते, सा कार्त्तिकी "नक्षत्रेण युक्तः कालः" इत्यण् । अणन्तत्वाङ्ङीप् । साऽस्मिन् मासे स कार्त्तिको मासः, "साऽस्मिन् पौर्णमासीति संज्ञायाम्" इत्यण्, "लुबविशेषे" इति तस्य लुप् कार्त्तिकः । एवं मार्गशीर्षादयोऽपि बोध्याः । अत्र यद्यपि कृत्तिकादिनक्षत्रं कार्त्तिकादिषु प्रयोजकमुक्तम्, तथापि कृत्तिकादि द्वन्द्वं त्रिकञ्च प्रयोजकं बोध्यम्,

"अन्त्योपान्त्यौ त्रिभौ ज्ञेयो फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया ॥
द्वे द्वे चित्रादिताराणां परिपूर्णेन्दुसङ्गमे ।
मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः ॥"

इति च्यवनसङ्कर्षणवचनात् ।

अथ मासदेवता अपरार्के—

"केशवो मार्गशीर्षे तु पौषे नारायणः स्मृतः ।
माधवो माघमासे तु गोविन्दः फाल्गुने तथा ॥
चैत्रे मासि भवेद्विष्णुर्वैशाखे माधवस्तथा ।
त्रिविक्रमो ज्येष्ठमासे आषाढे वामनस्तथा ॥
श्रीधरो श्रावणे ज्ञेयो हृषीकेशस्ततः परम् ।
पद्मनाभ आश्वयुजे ततो दामोदरो मतः ॥
सर्वेष्वेतेषु मासेषु नरकारिर्मलिम्लुचः ।" इति ।

अथ मलमासः । हेमाद्रौ ब्रह्मसिद्धान्ते—

"चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्तितः ॥" इति ।

स द्वेधा—अधिमासक्षयमासभेदात् । तदुक्तं मदनरत्ने काठकगृह्ये—

"यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः ॥" इति ।

तत्राधिमासस्वरूपं भृगुणा दर्शितम्—

"एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।

हव्यकव्यक्रिया हन्ता तदा ज्ञेयोऽधिमासकः ॥" इति ।

स्थूलमानेन तस्य कालो ब्रह्मसिद्धान्ते—

"द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्येकोऽधिमासकः ॥" इति ।

क्षयमासस्वरूपं सिद्धान्तशिरोमणौ—

असंक्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्यात्
तदा वर्षमध्येऽधिमासद्वयं च ।

एकः क्षयात् प्राक्, अपरस्तूर्द्ध्वमित्येवमधिमासद्वयं भवतीति भावः । अस्मिन्नेवार्थे जाबालिः—

"एकस्मिन्नेव वर्षे तु द्वौ मासावधिमासकौ ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः ॥" इति ।

प्राकृतः शुद्धः कर्मार्ह इत्यर्थः । तयोर्नामनी ज्योतिर्ग्रन्थे—

"यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः ॥" इति ।

क्षयमासात् प्राचीनोऽसंक्रान्तः संसर्पः, उत्तरोंऽहस्पतिरित्यर्थः । कर्मसु सम्यक् सर्पतीति संसर्पः । अत एव कर्मार्हः ।

द्वितीयस्तु अंहसां पापानां पतिः, अतो निषिद्ध इति भावः ।

क्षयस्यागमनकालस्तत्रैव—

"गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः ।
गजाद्यग्निभूमिस्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च ॥" इति ।

अस्यायमर्थः—अब्धयश्चत्वारः, अद्रयः सप्त, नन्दा नव–९७४ एतैर्युक्ते शाककाले क्षयमासो गतः पूर्वमासीत् । तिथयः पञ्चदश, ईशा एकादश–१११५ एतैर्युक्ते शाककालेऽग्रे भविष्यति भविता । अङ्गानि षट्, अक्षाणि पञ्च, सूर्या द्वादश—१२५६, गजा अष्टौ, अद्रयः सप्त, अग्नयस्त्रयः, भूरेकः–१३७८, कुरेकः, वेदाश्चत्वारः, इन्दुरेकः–१४१ एतैर्वर्षैरयं मलमासः प्रायशो भवतीत्यर्थः । च परम्, क्वचित्कदाचित्, गावो नव, कुरेकः–१९ एतैर्वर्षैरपि भवतीत्यर्थः । अथाऽत्र कार्याकार्य्यं विविच्यते । जाबालिः—

"नित्यनैमित्तिके कुर्याच्छ्राद्धं कुर्यान्मलिम्लुचे ।
तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन ॥" इति ।

अगतिकानि काम्यान्यपि ज्वरादिरोगं शान्तिकारीर्यादिग्रहदौस्थ्यपरिहारकादीनि मलेऽपि कार्याणि,

"रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च ।
यद् दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यति ॥"

इति मरीचिवचनात् । अगतिककाम्यनिषेधोऽप्यारम्भसमाप्तिविषय एव—

"असूर्या नाम ये मासा न तेषु मनुसंमतः ।

व्रतानां चैव यज्ञानामारम्भश्च समापनम् ॥" इति ।

तेनैवोक्तत्वात् । 'असूर्याः' संक्रान्तिरहिताः । 'नाम' प्रसिद्धौ ।
केषांचिन्नित्यानामपि निषेधः काठकगृह्ये—

"पुष्टीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ।

महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ॥

स्पष्टमासविशेषाख्या विहितं वर्जयेन्मले ।" इति ।

'पुष्टिः' काठकादौ प्रसिद्धेति श्रीगुरवः । आग्रयणे विकल्पमाह पैठीनसिः—

"संक्रान्तिरहिते मासि कुर्यादाग्रयणं न वा" इति ।

वृद्धमनुः—

"अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।

वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥

माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ।" इति ।

अत्राग्न्याधेयमपूर्वम्, प्रतिष्ठाऽप्यपूर्वा, अग्न्यनुगमननिमित्तमाधानं चाण्डालादिसंस्पर्शप्रयुक्ता पुनः प्रतिष्ठा चाऽसावकाशनैमित्तिकत्वान्मलमासेऽपि कार्या,

"कुर्यात् व्रतादिकं कर्म प्रयत्नेन मलिम्लुचे ।

नैमित्तिकं च कुर्वीत सावकाशे न यद्भवेत् ॥"

इति भविष्यात् । वृषोत्सर्गनिषेधस्तु काम्यवृषोत्सर्गपरः । प्रेतोद्देश्यकस्तु मलेऽपि भवति—

"एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥"

इत्यस्मन्मातृप्रपितामहश्रीभट्टनारायणपदपाथोजलिखितवचनात् । हेमाद्रौ ज्योतिःशास्त्रे—

"तत्र दत्तमदत्तञ्च हुतं न हुतमेव च ।
सुजप्तमप्यजप्तं स्यान्नोपवासः कृतो भवेत् ॥
न यात्रां न विवाहञ्च न च वास्तुनिवेशनम् ।
प्रतिष्ठां न च देवानां प्रासादग्रामभूरुहाम् " ॥ इति ।

स्कान्दे—

"मलमासेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत् ।"

'अनावृत्तम्' नूतनम्, यदुक्तम्—"नूतनतीर्थस्नानादि मलमासे न कर्त्तव्यम्" इति । तस्य क्वचित् प्रतिप्रसवो वायुपुराणे—

"गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ।" इति ।

स्मृत्यन्तरे—

"वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च ।
न कुर्यान्मलमासे तु महादानव्रतानि च ॥" इति ।

मदनरत्ने स्मृतिसंग्रहे—

"जातकर्म प्रसूतिश्च सीमन्तोन्नयनव्रते ।
मलिम्लुचेऽपि कर्त्तव्यं निमित्तं यदि जायते ॥" इति ।

गृह्यपरिशिष्टे—

"अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्त्तव्यं काम्या इष्टीश्च वर्जयेत् ॥" इति ।

'अवषट्कारहोमाः' अग्निहोत्रोपासनवैश्वदेवादयः । 'पर्व' दर्शपूर्णमासस्थालीपाकाः । स्मृत्यन्तरे—

"चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षय्यकारकम् ॥" इति ।

यमः—

"सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् ।
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ॥
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ।
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ॥
चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् ।
कार्याणि मलमासेऽपि नित्यनैमित्तिकं तथा ॥" इति ।

वार्षिकमहालयनिषेधवचनानि श्राद्धचन्द्रिकाप्रकाशे उदाहरिष्यन्ते ।

बृहस्पतिः—

"अस्तं गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
व्रतारम्भापवर्गौ च न कुर्यान्मौञ्जिबन्धनम् ॥" इति ।

अस्तलक्षणं सिद्धान्ते—

"रविणासत्तिरन्येषां ग्रहाणामस्तमुच्यते ।
ततोऽर्वाग्वार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्त्तितम् ॥" इति ।

बाल्यवार्धकप्रमाणं ज्योतिःशास्त्रे—

"प्राक् पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि ॥"

विशेषस्तत्रैव ज्ञेयः । मलमासे श्राद्धं कार्यं न वेति विचारो विस्तरेण वक्ष्यते श्राद्धचन्द्रिकाप्रकाशे । अत्र दानमुक्तं हेमाद्रौ पाद्मे—

"अधिमासे तु सम्प्राप्ते गुडसर्पिर्युतानि च ।
त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ॥
अधिमासे तु सम्प्राप्ते त्रयस्त्रिंशत्तु देवताः ।
उद्दिश्याऽपूपदानेन पृथ्वीदानफलं लभेत् ॥
त्रयस्त्रिंशदपूपांश्च कांस्यपात्रे निधाय च ।
सघृतं सहिरण्यञ्च ब्राह्मणाय निवेदयेत् ॥" इति ।

तिथ्यादि संकीर्त्य मम समस्तपापक्षयद्वारा श्रीनरकारिदेवप्रीत्यर्थमिदं त्रयस्त्रिंशदपूपात्मकं कांस्यपात्रस्थं वायनं सघृतं सहिरण्यममुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । कृतस्याधिमासवायनदानस्य साङ्गतार्थमिमां दक्षिणां तुभ्यमहं सम्प्रददे । इति यथाशक्ति दक्षिणां दत्त्वा प्रार्थयेदेतैर्मन्त्रैः—

"विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः ।
अपूपान्नप्रदादेन मम पापं व्यपोहतु ॥
नारायण ! जगद्बीज ! भास्करप्रतिरूपक ! ।
दानेनानेन पुत्रांश्च सम्पदश्चाभिवर्द्धय ॥

यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम् ।
शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु ॥"

इति मलमासनिर्णय इत्युपरम्यते ।

अथ संवत्सरः, स च सम्यग् वसन्त्यस्मिन्नयनर्त्तुमासपक्षादय इति व्युत्पत्त्या मासाद्यवयवयुक्तोऽवयवी कश्चित्प्रत्यक्षः । स द्वादशमासैर्जायते, "द्वादश मासाः संवत्सरे" इति श्रुतेः । अत्र मासानां त्रैविध्येन संवत्सरोऽपि त्रिविधः । तदुक्तं ब्रह्मसिद्धान्ते—

"चान्द्रसावनसौराणां मासानां तु प्रभेदतः ।
चान्द्रसावनसौराश्च त्रयः संवत्सरा अमी ॥" इति ।

तत्र चान्द्रसंवत्सरश्चैत्रशुक्लप्रतिपदादिः फाल्गुनदर्शान्तश्चतुःपञ्चाशदधिकशतत्रयदिनात्मकः ३५४ । सौरस्तु मेषादिमीनान्तः पञ्चषष्ट्यधिकशतत्रयदिनात्मकः ३६५ । सावनस्तु षष्ट्युत्तरशतत्रयदिनात्मकः ३६० । ते च त्रयः संवत्सरा वचनविशेषेण केषुचित् कर्त्तव्यकर्मसु व्यवतिष्ठन्ते, केषुचिद् विकल्पन्ते इति सङ्क्षेपः । अथ क्षौरनिषिद्धकालं प्रदर्शयामः । षट्त्रिंशन्मते—

"कुम्भे च कर्कटे चैव कन्यायां कार्मुके रवौ ।
रोमखण्डं गृहस्थस्य पितॄन् त्रासयते यमः ॥
कन्यां सर्वां कर्कटके त्रेधा भागद्वयं त्यजेत् ।
धनुः कुम्भेऽर्धभागं च पूर्वमेव परित्यजेत् ॥" इति ।

वृद्धगार्ग्यः—

"मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमत्र न कर्त्तव्यं विवाहो गृहकर्म च ॥" इति ।

यमः—

"सिताष्टमीषु सर्वासु भूताहेन्दुक्षये तथा ।
तैलाभ्यङ्गं क्षौरकर्म स्त्रीसङ्गं वै विवर्जयेत् ॥" इति ।

भारद्वाजः—

"निषिद्धतिथिवारादौ भोजनानन्तरं च यः ।
क्षौरं करोति तद्गेहे नाश्नन्ति पितरः सुराः ॥
भुजिक्रियोत्तरं कालं क्षौरं कर्म करोति यः ।
कृमिभक्ष्यो भवेत् सोऽपि यावच्चन्द्रदिवाकरौ ॥" इति ।

वृद्धगार्ग्यः—

"रव्यारसौरिवारेषु रात्रौ पाते व्रतेऽहनि ।
श्राद्धाहप्रतिपद्रिक्ता भद्राः क्षौरेषु वर्जयेत् ॥"

'पाते' व्यतिपाते । 'भद्राः' द्वितीयासप्तमीद्वादश्यः । मार्कण्डेयोऽपि—

"अष्टमी च तथा षष्ठी नवमी च चतुर्दशी ।
क्षुरकर्मणि वर्ज्या च पर्वसन्धिस्तथैव च ॥" इति ।

श्मश्रुकर्मणि निषेधमाह मरीचिः—

"निरासनस्य सुप्तस्य तिष्ठतश्च तथैव च ।
सायं भुक्तवतश्चैव स्नातस्य क्षुधितस्य च ॥
यात्रायुद्धोद्यतस्यापि श्मश्रुकर्म्म विवर्जयेत् ।" इति ।

अन्यत्र विस्तरः । अस्य सर्वस्यापवादस्तीर्थप्राप्त्यादौ—

"क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ॥"

इति स्मृतेः । अथ कलिवर्ज्यानि प्रोच्यन्ते ।

हेमाद्रौ—

"विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।"

तथा—

"बालिकाक्षतयोन्यास्तु वरेणान्येन संस्कृतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥"

आदित्यपुराणे—

"यस्तु कार्तयुगो धर्मो न कर्त्तव्यः कलौ युगे ।
पापप्रयुक्ताश्च सदा कलौ नार्यो नराः सदा ॥"

तथा—

"दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितेरधि ॥"

माधवीये—

"अस्थिसंचयनादूर्ध्वमङ्गसंस्पर्शनं तथा ।" इति ।

ब्रह्मपुराणे—

"दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्राद् मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥

नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः ।"

क्रतुः—

"देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥"

आदित्यपुराणे—

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥"

'ज्येष्ठांशम्' विषमविभागम् । हेमाद्रौ गरुडः—

"न कलौ क्रियते ह्यश्वमेधो वाप्यथ गोसवः ।
नरमेधोऽक्षतानारी देवरात्पुत्रसन्ततिः ॥"

मदनपारिजाते—

"अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥" इति ।

देवलः—

"यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात् कलौ युगे ॥" इति ।

कलावर्द्धाधानमेव कार्यमित्याह लौगाक्षिः—

"अर्द्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ॥" इति ।

'पूर्वयुगाश्रिता' कलेः पूर्वं यद् युगं तदाश्रितेति सङ्क्षेपः । अत्र

विस्तरस्तु हेमाद्रिमाधवादौ द्रष्टव्य इति दिक्। अथ पर्व-वर्ज्यानि। हेमाद्रौ मनुः—

"चतुर्दश्यष्टमीदर्शपौर्णमास्यर्कसंक्रमः।
एषु स्त्रीतैलमांसानि दन्तकाष्ठानि वर्जयेत् ॥"

स्मृतिसमुच्चये—

"सायं संध्यां परान्नं च परभोजनमैथुने।
तैलं मांसं शिलापिष्टममावास्यां विवर्जयेत् ॥
सूर्यर्क्षं गते सोमे परान्नं यो हि भक्षयेत्।
तस्य मासगतं पुण्यं यस्यान्नं तस्य तद्भवेत् ॥
अमावास्यासु सर्वासु नवं वस्त्रं न धारयेत्।" इति।

प्रसंगादन्येषां पदार्थानां निषेधकालः प्रदर्श्यते। व्यासः—

"षष्ठ्यष्टमी अमावास्या पक्षद्वयचतुर्दशी।
अत्र संनिहितं पापं तैले मांसे क्षुरे भगे ॥"

रविवारादिषु तैलस्नानफलान्याह स एव—

"आदित्यादिषु वारेषु तापः कीर्तिर्मृतिर्धनम्।
दारिद्र्यं दुर्भगत्वं च कामाप्तिः स्नानतः क्रमात् ॥"

'स्नानतः' अभ्यङ्गस्नानतः।

तथा—

"त्रयोदश्यां तृतीयायां प्रतिपद्दशमीदिने।
तैलाभ्यङ्गं न कुर्वीत स्पृशेद्वा नवमीदिने ॥"

अत्र विशेषमाह हेमाद्रौ प्रचेताः—

"सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।

अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥" इति ।

तस्मात्तैलाभ्यङ्गनिषेधस्तिलतैलाभ्यङ्गनिषेधपर्यवसायी । हेमाद्रौ स्कान्दे—

"शिरः कपालमन्त्राणि नखचर्मतिलांस्तथा ।

एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥" इति ।

'शिरः' नारिकेलम्, 'कपालम्' अलाबु, 'अन्त्राणि' पटोलम्, 'नखम्' निष्पावः, 'चर्म' मसूरिका ।

"शिरो नारिकेलम्, कपालमलाबु, अन्त्राणि पटोलम्, नखं निष्पावः, चर्म मसूरिकाः, तिला वृन्ताकम् ।" इति हेमाद्रिः ।

मदनरत्ने स्कान्दे—

"स्नानं चैव महादानं स्वाध्यायपितृतर्पणे ।

प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥" इति ।

'स्नानम्' काम्यम् ।

अथ जन्मतिथिकृत्यम् । ब्रह्मपुराणे—

"सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।

गुरुदेवाश्च विप्राश्च पूजनीयाः प्रयत्नतः ॥" इति ।

'सर्वैः' ब्राह्मणक्षत्रियवैश्यशूद्रैः । श्रीपतिमालायाम्—

"नववस्त्रधरो भूत्वा पूजयेच्च चिरायुषम् ।

द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ॥

मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा।" इति।

"ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम्।

प्रह्लादं च हनूमन्तं विभीषणमथाऽर्चयेत्॥"

पूजितदेवतानां नाममन्त्रैर्होमः कार्य्यः। होमसंख्या देवीपुराणे—

"होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत्।

अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते॥"

होमद्रव्यमाज्यम्, "आज्यं द्रव्यमनादेशे" इत्युक्तत्वात्। मार्कण्डेय-प्रार्थना कृत्यचिन्तामणौ।—

"मार्कण्डेय! महाभाग! सप्तकल्पान्तजीवन!।

आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव॥" इति।

ततो गुडतिलयुतं पयः पिबेत्। पाने मन्त्रः—

"सतिलं गुडसंमिश्रमञ्जल्यर्द्धमितं पयः।

मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे॥"

'पयः' क्षीरम्। जन्मतिथौ वर्ज्यानि उक्तानि स्कान्दे—

"खण्डनं नखकेशानां मैथुनाध्यानमेव च।

आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत्॥" इति।

इदं मलमासे न कार्यम्, पूर्वोक्त—"स्पष्टमासविशेषाख्य" इति-वचनात्। जन्मतिथेः खण्डत्वे सति निर्णयः देवीपुराणे—

"घस्रद्वये जन्मतिथिर्यदा स्यात्

पूज्या तदा जन्मभसंयुता च।

असंस्कृताभे न दिनद्वयेऽपि

पूज्या परा या भवतीह तन्त्रम् ॥" इति ।

उभयदिनेऽपि नक्षत्रयोगेऽपि परा, पूर्वोक्त—"युगाद्या वर्षवृद्धिश्च" इति—भविष्यवचनात् । इति श्रीमद्भारद्वाजमहादेवभट्टात्मजदिवाकरविरचिते तिथ्यर्के जन्मतिथिकृत्यम् ॥

अथ श्राद्धामावास्या निश्चीयते । साऽपराह्णव्यापिनी ग्राह्या,

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः ॥"

इति कात्यायनोक्तेः ।

पिण्डानां पिण्डपितृयज्ञाङ्गभूतानामनु पश्चादाहियते क्रियते इति पिण्डान्वाहार्यकममाश्राद्धम् । राजनि चन्द्रे क्षीणे मार्तण्डमण्डलं प्रविष्टे सति वासरस्य दिवसस्य तृतीयेंऽशेऽपराह्णरूपे शस्यते—कार्यमित्यर्थः ।

"दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
अपराह्णे पितॄणां च तत्र दानं प्रशस्यते ॥"

इति शातातपोक्तेश्च । अत्र यद्यपि च त्रेधाविभागाभिप्रायेण पराह्णकालो व्याख्यातः, तथापि त्रिमुहूर्तात्मकसायाह्ने श्राद्धनिषेधात् पञ्चधाविभक्तदिवसाभिप्रायेण अपराह्णो बोद्धव्य इति तत्त्वम् । विवेचयिष्यते चैतत् स्पष्टं श्राद्धचन्द्रिकाप्रकाशे । त्रेधाविभागपक्षस्तु आहिताग्निविषयः, तस्य कर्मद्वयानुरोधदीर्घापराह्णा-

पेक्षणात् । पूर्वेद्युरेवापराह्णव्यापिनी चेत्, सैव ग्राह्येत्याह माधवीयें हारीतः—

"यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते ।
अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम् ॥" इति ।

यत्तु कार्ष्णाजिनिवचः

"भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धे कर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥" इति,

तदपराह्णव्याप्तिविषयमिति माधवः ।

'अपराह्णे' चतुर्दशीवेधपरम्" इति हेमाद्रिरुवाच ।

द्वितीयेऽह्नि चेत्तादृशी, द्वितीयैव इत्याह स एव—

"अपराह्णः पितॄणान्तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाऽस्तानुयायिनी ॥" इति ।

दिनद्वयेऽपराह्णव्याप्तिर्द्वेधा—एकदेशेन कार्त्स्न्येन चेति । एकदेशव्याप्तिरपि द्वेधा भिद्यते—वैषम्येण साम्येन चेति । तत्र वैषम्येणैकदेशव्याप्तौ महत्त्वं निर्णायकम् । तथा च माधवीये स्मृत्यन्तरे—

"अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।
तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्म्मणि ॥" इति ।

शिवराघवसंवादेऽपि—

"अल्पाऽपराह्णे त्याज्या सा ग्राह्या स्यादधिका भवेत् ।" इति ।

साम्येनैकदेशव्याप्तौ खर्वादिशास्त्रं निर्णायकम् । खर्वादिशास्त्रं तु—

"खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात् पूर्वकालिकी ॥" इति ।

खर्वः साम्यम्, दर्पो वृद्धिः, हिंसा क्षयः । माधवीये शिवराघवसंवादेऽपि—

"अमावास्या तु या हि स्यादपराह्णद्वयेऽपि सा ।
क्षये पूर्वाऽपरा वृद्धौ साम्येऽपि च परा स्मृता ॥" इति ।

स्मृत्यन्तरेऽपि—

"तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥" इति ।

कात्स्न्येनोभयत्रापराह्णव्याप्तावपि तिथिवृद्धित्वात् कुहूरेव ग्राह्या । दिनद्वयेऽपराह्णव्याप्तौ जाबालिः—

"अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥" इति ।

आदिशब्देन स्त्रीशूद्रौ गृह्येते । तथा च लौगाक्षिराह—

"द्विजैः कार्या सिनीवाली साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूर्ज्ञेया तथा चानग्निकैर्द्विजैः ॥" इति ।

सिनीवालीकुह्वोर्लक्षणमाह व्यासः—

"दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता ।" इति ।

एतदर्थपराण्यन्यानि वचनानि ग्रन्थविस्तरभियेह नोपात्तानी-

त्यलं पल्लवितेन । अथ पिण्डपितृयज्ञकालः । आश्वलायनः—

"अमावास्यायामपराह्णे पिण्डपितृयज्ञः ।" इति ।

अत्र नारायणवृत्तिः—अमावास्याशब्दः प्रतिपत्पञ्चदश्योः सन्धि-वचनोऽप्यत्रापराह्णशब्दसमन्वयात् तद्वत्यहोरात्रे वर्त्तते । तस्या-पराह्णे चतुर्थे भागे पिण्डपितृयज्ञः कार्यः । औपवसथ्ये यजनीये वाऽहनि यदा त्वहोरात्रसन्धौ तिथिसन्धिः स्यात्, तदौपवसथ्य एवाऽहनि क्रियते इति ।

अत एव प्रयोगपारिजातकारः—

"मुहूर्त्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत् ।
तद्दिनमक्षयं ज्ञेयं पर्वशेषं तु पर्ववत् ॥"

इति हेमाद्रिधृतं हारीतवचनं पिण्डपितृयज्ञपरमयोजयत् । अयं च पिण्डपितृयज्ञः स्मार्ताग्निमता मृतपितृकेण यागपूर्वदिने क्रियमाणे दर्शश्राद्धव्यतिषङ्गेण कार्यः, "आहिताग्निः पिण्डपितृयज्ञं कृत्वा करोति । अनाहिताग्निस्तु तदितरेण व्यतिषज्यते ।" इति परिशिष्टात् ।

व्यतिषङ्गो नाम श्राद्धपितृयज्ञयोर्विच्छिद्यविच्छिद्य अनुष्ठान-विशेषः । यागदिने क्रियमाणस्तु केवलः कार्यः, पूर्वदिने दर्शश्राद्धं यागदिने केवलः पितृयज्ञ इति भावः । आपस्तम्बानामाश्वलाय-नवन्निर्णयः तथैवापस्तम्बस्मृतेः । कात्यायनबौधायनैर्यागात्पूर्वेऽ-हनि कार्यः, तथैव तत्सूत्रे प्रतिपादितत्वात् । इत्यन्यत्र विस्तरः । अथ क्षयाहश्राद्धकालो निर्णीयते । तत्र क्षयाहश्राद्धमेकोद्दिष्ट-

विधिना क्रियते चेत्, मध्याह्नव्यापिन्यां क्षयाहतिथौ कार्यम् ।
यदि पार्वणविधिना, तदाऽपराह्णव्यापिन्यां कार्यम्,

"आमश्राद्धं तु पूर्वाह्णेऽपराह्णे पार्वणं भवेत् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥"

इति शातातपवचनात् ।

दिनद्वयेऽपराह्णव्यापित्वे माधवीये बौधायनो निर्णयमाह—

"अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः ।
क्षये पूर्वा तु कर्त्तव्या वृद्धौ कार्या तथोत्तरा ॥" इति ।

अत्र माधवादयस्तु—उत्तरतिथिगतावेव वृद्धिक्षयौ ग्राह्यौ, न ग्राह्यतिथिगतावित्याहुः । श्रीमातामहगुरवस्तु परमवृद्ध्यनन्तरमाकस्मिकक्षयस्य ज्योतिःशास्त्रमर्यादया सम्भवात् पूर्वतिथ्यपेक्षया ग्राह्यतिथिगतावेव वृद्धिक्षयौ ग्राह्याविति तत्त्वमित्याहुः । दिनद्वये तदव्याप्तौ तु पूर्वैव ग्राह्या,

"द्वहेऽप्यव्यापिनी चेत् स्यान्मृताहस्य तु या तिथिः ।
पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद् यदि ॥"

इति मनुवाक्यात् ।

"द्वहेऽप्यव्यापिनी चेत् स्यान्मृताहस्य तु या तिथिः ।
पूर्वस्यां निर्वपेत् पिण्डमित्याङ्गिरसभाषितम् ॥"

इति समन्तुवाक्याच्च । "साम्ये तु परैव, देवस्वामिवचनात्"इति माधवः । अत्राप्येकदेशादिव्याप्तौ दर्शनिर्णयवन्निर्णयो बोध्यः । अमावास्या तु वाहीतिवचनात्प्रदिष्टौ वृद्धिक्षयौ ग्राह्यतिथिगतावेवा-

नया दिशा ज्ञेयौ । अपराह्णद्वयव्यापिनीत्यत्र कालद्वयव्यापित्वं विवक्षितमित्यास्तां तावत् । अथ व्रतविधिं व्याख्यास्यामः । तत्राधिकारिणो मदनरत्ने भविष्ये—

"अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते ।
व्रतोपवासनियमैर्नानादानैस्तथा नृप ! ॥" इति

शूद्रोऽपि

"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥"

इति व्यासोक्तेर्व्रताधिकारमर्हति । सधवास्त्रीणान्तु भर्त्रनुज्ञयैव व्रताधिकारः—

"भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदा ।"

इति माधवीये कात्यायनोक्तेः । व्रतारम्भकालमाह मदनरत्ने सत्यव्रतः—

"उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् ।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम् ॥" इति ।

तत्रैव गार्ग्योऽपि—

"अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उद्यापनशुभारम्भान व्रतानां नैव कारयेत् ॥" इति ।

ब्रह्मयामले—

"दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा ।
न त्याज्या शुभकार्येषु प्राहुरेवं पुरातनाः ॥" इति ।

मदनरत्ने भविष्ये—

"क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहवनं सन्तोषः स्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ।" इति ।

कूर्मपुराणे—

"वहिर्ग्रामान्त्यजासूतिं पतितं च रजस्वलाम् ।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥"

विष्णुरहस्ये—

"स्मृत्यालोकनगन्धादि स्वादनं परिकीर्त्तनम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् ॥
गात्राभ्यङ्गं च ताम्बूलं शिरसश्चानुलेपनम् ।
व्रतस्थो वर्जयेत् सर्वं यच्चान्यद् बलरागकृत् ॥"

पृथ्वीचन्द्रोदयेऽग्निपुराणे—

"व्रीहिषष्टिकमुद्गाश्च कलापाः सलिलं पयः ।
श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ॥
कूष्माण्डालाबुवार्ताकपालकीज्योत्स्निकास्त्यजेत् ।
चरुभैक्ष्यं सक्तुकणान् शाकं दधि घृतं मधु ॥
श्यामाकाः शालिनीवाराः पावकं मूलतण्डुलम् ।
हविष्यव्रतनक्तादावग्निकार्यादिके हितम् ॥
मधु मांसं विहायान्यद् व्रते च हितमीरितम् ।" इति ।
'पालकी' पोई, 'ज्योत्स्निका' कोशातकी ।

अथ स्त्रीव्रतेषु व्रतहेमाद्रौ विशेषः—

"गन्धालङ्कारताम्बूलपुष्पमालानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥" इति ।

इदं च ताम्बूलादि तासां सौभाग्यव्रतेष्वेव न दुष्यति; एकादश्यादौ तु दुष्यत्येव, तत्र तन्निषेधात् । हेमाद्रौ पाद्मे—

"गर्भिणी सूतिकादिश्च कुमारी वाऽथ रोगिणी ।
यदाऽशुद्धा तदाऽन्येन कारयेत् प्रयता स्वयम् ॥" इति ।

'प्रयता' शुद्धा स्वयं कुर्यादित्यर्थः । मदनरत्ने मात्स्येऽपि—

"अन्तरा तु रजोयोगे पूजामन्येन कारयेत् ।" इति ।

प्रतिनिधीनाह निर्णयामृते पैठीनसिः—

"भार्या पत्युर्व्रतं कुर्याद् भार्य्यायाश्च पतिर्व्रतम् ।
असामर्थ्येऽपरस्ताभ्यां व्रतभङ्गो न जायते ॥"

स्कान्देऽपि—

"पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् ॥" इति ।

पराशरः—

"उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥" इति ।

मदनरत्ने प्रभासखण्डे—

"भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखाऽपि च ।
यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः ॥

एभिः कृतं महादेवि ! स्वयमेव कृतं भवेत् ।" इति ।

अत्र कश्चिद्विशेषः—

"काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ।
काम्येषूपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः ॥" इति ।

छागलेयः—

"पूर्व व्रतं गृहीत्वा यो नाचरेत्काममोहितः ।
जीवन् भवति चाण्डालो मृतः श्वा चाभिजायते ॥"

गरुडपुराणे—

"क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद् यदि ।
दिनत्रयं न भुञ्जीत मण्डनं शिरसो भवेत् ॥" इति ।

प्रायश्चित्तादनन्तरमन्तरितव्रतं कार्यम्,

"प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ।"

इति वायुपुराणात् । या तु प्रायश्चित्ताम्नानादतिक्रान्तव्रतानुष्ठानं नास्तीति गम्यते इति केषाञ्चिदुक्तिः, सा भ्रान्तिमूलिकैव । अथ निमित्तानुरोधेन सदा पुण्यकालः । हेमाद्रौ विष्णुधर्मोत्तरे—

"कालः सर्वोऽपि निर्दिष्टः पात्रं सर्वमुदाहृतम् ।
अवाप्तस्य प्रदाने तु नात्र कार्या विचारणा ॥
तदैव दानकालः स यदोभयमुपस्थितम् ।"

तथा—"नहि कालं प्रतीक्षेत जलं दातुं तृषान्विते ।
अन्नोदकं सदा देयमित्याह भगवान् मनुः ॥" इति ।

स्कान्दे—

"अर्द्धप्रसूतां गां दद्यात् कालादि न विचारयेत् ।
कालः स एव ग्रहणे यदा वै द्विमुखी तु गौः ॥" इति ।

व्यासः—

"आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोद्धारणाय वै ॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।
शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यान्मृतस्य च ॥"

वाराहे—

"व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः ।
पुण्यकालास्तथा सर्वे यदा मृत्युरुपस्थितः ॥
तदा भूमिहिरण्यादि दत्तमक्षयतामियात् ।" इति ।

विष्णुपुराणे—

"यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ।
तदैव दानकालः स्याद् यतोऽनित्यं हि जीवितम् ॥" इति दिक् ।

श्रीबालकृष्णात्मजसूनुनिर्मितां
वर्षे खवेदाश्वहिमांशुसंयुते ।
कृतिं विलोक्याऽखिलकालनिर्णयं
निःशङ्कमाशंसतु पण्डितो जनः ॥ १ ॥

बुधानामुपकाराय धर्मशास्त्रसुधानिधिः ।
दिवाकरेण रचितः सुधानिधिरिवापरः ॥ २ ॥

क्वाहं मन्दमतिः क्वायं धर्मशास्त्रसुधानिधिः ।
तस्माद्भक्तेर्विलासोऽयं मार्तण्डाङ्घ्रिसरोजयोः ॥ ३ ॥

ग्रन्थेऽस्मिन् विमलमतेर्दिवाकरस्य
तिथ्यर्के गुणगणवत्त्वमेव मुख्यम् ।
तत्सन्तः शिरसि धृताञ्जलिस्तु याचे
निःशङ्कं सदसदिहोदितं विमृश्यम् ॥ ४ ॥

उक्तं नात्र मया स्वयं स्वरचितं यद्भट्टपादादिभिः
प्रोक्तं कालविनिर्णये तदखिलं स्पष्टं परज्ञप्तये ।
सन्दिष्टं गुरुदत्तमन्त्रकृपया शार्दूलविक्रीडितं
तेन श्रीरविमण्डलान्तर्गतो नारायणः प्रीयताम् ॥५॥

यद्वाक्याद्विधिवाक्यानामपूर्वार्थाभिधानता ।
नीलकण्ठो जयत्ययं मीमांसकधुरन्धरः ॥ ६ ॥

नमः सवित्रे रामाय शम्भवे गुरवे तथा ।
मात्रे भवान्यै वाग्देव्यै कुलदेव्यै श्रिये नमः ॥ ७ ॥

इति श्रीभारद्वाजबालकृष्णात्मजसकलविबुधचूडा-
मणिमहादेवात्मजसकलविद्यानिधानश्री-
दिवाकरविरचिते धर्मशास्त्रसुधानिधौ
तिथ्यर्कः समाप्तिमगमत् ।

---

श्रीवैजनाथरचिताः

## तिथ्यर्कविषयानुक्रमणिकाश्लोकाः

दिवाकरतनूजेन वैजनाथेन धीमता ।
खबाणसप्तभूयुक्ते वर्षे माधवसंज्ञके ॥ १ ॥
मासि तातकृतग्रन्थेऽनुक्रमः संप्रदर्श्यते ।
विदुषां सुखलब्ध्यर्थमनया श्लोकमालया ॥ २ ॥
मङ्गलाचरणं पूर्वं मातृवंश्यानुवर्णनम् ।
स्वस्य वंश्यानुचरितं ततो विधिनिरूपणम् ॥ ३ ॥
तिथिरूपं ततः प्रोक्तं तद्द्वैविध्यमुदाहृतम् ।
लक्षणं निर्णयस्योक्तं प्रतिपन्निर्णयस्ततः ॥ ४ ॥
नाम्नो निरुक्तिस्तस्यास्तु शुक्ले पूर्वाऽपरेऽपरा ।
उपवासे तु पूर्वैव पक्षद्वयगतापि हि ॥ ५ ॥
सङ्कल्पः प्रातरेवात्र पूर्वविद्धास्वपीरितः ।
तिथ्यन्ते पारणं प्रोक्तं सापवादं परेऽहनि ॥ ६ ॥
एकभक्तादिषु तथा गौणकालेऽप्युपोषणम् ।
ततः कर्मोपयुक्तत्वात्तिथिदेवप्रपूजनम् ॥ ७ ॥
ततो मन्दादिसंज्ञोक्ता तिथिवर्ज्यानुकीर्त्तनम् ।
चैत्रशुक्लप्रतिपदो निर्णयो ब्रह्मपूजनम् ॥ ८ ॥
शकादिश्रवणं तत्र निम्बप्राशनमेव च ।
वासन्तनवरात्रं च प्रपादानं तथैव च ॥ ९ ॥

तदभावे घटानां तु दानमुक्तं फलप्रदम् ।
अभ्यङ्गनित्यता प्रोक्ता ज्येष्ठप्रतिपदः कृतिः ॥ १० ॥
भाद्रशुक्लप्रतिपदः कृत्यमुक्तं महालयः ।
आश्विनस्य सिते पक्षे नवरात्रानुवर्णनम् ॥ ११ ॥
कलशस्थापनं कालकीर्त्तनं तु ततः परम् ।
त्रिरात्रं चैकरात्रं च फलभेदेन कीर्त्तितम् ॥ १२ ॥
वेदिकानिर्मितिश्चात्र कलशद्रव्यकीर्त्तनम् ।
प्रतिमाद्रव्यकथनं तदाकारप्रकीर्त्तनम् ॥ १३ ॥
वेदिकापरिमाणं च नियमाः पूजकस्य च ।
देवीपूजाप्रयोगस्तु कुमारीपूजनं ततः ॥ १४ ॥
वयःप्रमाणं तस्यास्तु पूजनानर्हकन्यकाः ।
कन्याभावे प्रतिनिधिश्चण्डीपाठजपे विधिः ॥ १५ ॥
सूतके पूजनं प्रोक्तं देव्यास्तत्र विशेषतः ।
भेदोऽपि कथितश्चात्र मलमासनिषेधनम् ॥ १६ ॥
चतुर्णामपि वर्णानामधिकारः प्रकीर्त्तितः ।
अश्वपूजा ततः प्रोक्ता तद्विधानक्रमोऽपि हि ॥ १७ ॥
अथायुधानां पूजाया मन्त्राः सर्वे यथाक्रमम् ।
निर्दिष्टाः कार्त्तिकस्यापि प्रतिपन्निर्णयः शुभः ॥ १८ ॥
तैलाभ्यङ्गस्य कथनं द्यूतं पर्वतपूजनम् ।
बल्यर्चनानुकथनं चैत्रप्रतिपदः कृतिः ॥ १९ ॥

श्वपचस्पर्शनं स्नानं होलिकाभूतिवन्दनम् ।
तन्मन्त्रश्चूतकुसुमप्राशनं मन्त्रसंयुतम् ॥ २० ॥
पूर्वविद्धा तिथिर्ग्राह्येत्युक्तं वेध उदाहृतः ।
सायं वेधस्ततः प्रोक्तोऽभ्यङ्गो नित्य इतीरितम् ॥ २१ ॥
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ।
द्वितीयानिर्णयः प्रोक्तः साधारण्येन कृत्स्नशः ॥ २२ ॥
चैत्रशुक्लद्वितीयायामुमापूजाऽग्निपूजनम् ।
प्रोक्ता तिथिः सोपपदा तत्राऽध्ययनवर्जनम् ॥ २३ ॥
रामयात्रोत्सवस्याथ कालः सर्वोऽपि कीर्त्तितः ।
बृहत्तपाव्रतं चोक्तमशून्याख्यव्रतं तथा ॥ २४ ॥
यमद्वितीया निर्णीता तत्कृत्यं चापि विस्तरात् ।
चैत्रकृष्णद्वितीयायामनङ्गोत्सव ईरितः ॥ २५ ॥
उत्सवे निर्णयः प्रोक्तस्तिथेः सिद्धविरुद्धकः ।
योगिनीनिर्णयः प्रोक्तस्तृतीयानिर्णयस्ततः ॥ २६ ॥
साधारणः समुदितस्ततो दोलोत्सवः स्मृतः ।
गौरीपूजनकालस्तु सनिर्णय उदाहृतः ॥ २७ ॥
सौभाग्यव्रतकालोऽथ जयन्ती मत्स्यसंज्ञिका ।
तृतीयाऽक्षयसंज्ञा तु सनिर्णयमुदाहृता ॥ २८ ॥
तत्कृत्यञ्चाऽपि सम्प्रोक्तं रेणुकासूनुसंभवः ।
तत्कालनिर्णयश्चाऽथ मलमासे युगादयः ॥ २९ ॥

मासद्वयेऽप्ययं पक्षो रम्भाव्रतविनिर्णयः ।
विशालाक्ष्यर्चनविधिः कज्जलीनिर्णयस्ततः ॥ ३० ॥

भाद्रशुक्लतृतीयाया निर्णयो ललिताविधिः ।
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ॥ ३१ ॥

चतुर्थीनिर्णयश्चाथ साधारण्येन कीर्त्तितः ।
चैत्रशुक्लचतुर्थ्यान्तु गणेशार्चनमीरितम् ॥ ३२ ॥

ज्येष्ठशुक्लचतुर्थ्यान्तु पार्वतीपूजनं स्मृतम् ।
सनिर्णयाऽत्र कथिता संकष्टाख्या चतुर्थिका ॥ ३३ ॥

बहुलाव्रतकालस्य निर्णयः संप्रदर्शितः ।
भाद्रशुक्लचतुर्थ्यास्तु विस्तरेण विनिर्णयः ॥ ३४ ॥

चन्द्रस्य दर्शने दोषो दोषशान्तिस्ततो मतः ।
तिथेरस्याश्च भौमादियोगप्राशस्त्यमीरितम् ॥ ३५ ॥

संज्ञान्तरं शिवाख्येति मार्गशुक्लचतुर्थिका ।
एकभक्तस्वरूपं तु सनिर्णयमुदाहृतम् ॥ ३६ ॥

नक्तस्वरूपं तत्कालः सन्ध्याशब्दार्थ एव च ।
सौरनक्तं यतेर्नक्तं विधवानक्तमेव च ॥ ३७ ॥

नक्तव्रतियमाः प्रोक्ता अयाचितविनिर्णयः ।
तत्फलं तत्र कालस्य निर्णयो निखिलः कृतः ॥ ३८ ॥

माघकृष्णचतुर्थ्यान्तु संकष्टाख्यं व्रतं स्मृतम् ।
माघशुक्लचतुर्थ्यास्तु तिलसंज्ञा प्रकीर्त्तिता ॥ ३९ ॥

निर्णयः कुन्दसंज्ञा च तस्या एव प्रकीर्त्तिता ।
फाल्गुनादिषु मासेषु चतुर्षु व्रतमीरितम् ॥ ४० ॥

तदुद्यापनरीतिस्तु पूजामन्त्रस्ततः परम् ।
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ॥ ४१ ॥

पञ्चमीनिर्णयश्चाऽथ सामान्येन प्रकीर्त्तितः ।
चैत्रे मासि तु पञ्चम्यां श्रीपूजनमुदीरितम् ॥ ४२ ॥

कल्पादीनां तु कथनं नागपूजननिर्णयः ।
निर्णयो ऋषिपञ्चम्यास्तत्कृत्यं चापि सर्वशः ॥ ४३ ॥

उपाङ्गललितादेव्याः पूजाकालविनिर्णयः ।
मार्गशुक्लस्य पञ्चम्या निर्णयस्तदनन्तरम् ॥ ४४ ॥

माघमासस्य पञ्चम्यां वसन्तोत्सवनिर्णयः ।
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ॥ ४५ ॥

संप्रोक्तो निर्णयः षष्ठ्याः पञ्चमीवेधनिर्णयः ।
यात्रा लोलार्कदेवस्य स्कन्दषष्ठीविनिर्णयः ॥ ४६ ॥

कुमारषष्ठ्यपि प्रोक्ता कपिलाषष्ठिका तथा ।
तत्कृत्यं चापि निर्दिष्टं संज्ञान्तरमुदाहृतम् ॥ ४७ ॥

बिल्वाभिमन्त्रणविधिर्वह्निपूजादिवासरः ।
चम्पाषष्ठी पुनः प्रोक्ता स्कन्दषष्ठ्यपि सा मता ॥ ४८ ॥

अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ।
सप्तमीनिर्णयश्चाऽथ समासेन प्रदर्शितः ॥ ४९ ॥

मधुमासस्य शुक्लायां सप्तम्यां भास्करार्चनम् ।
वैशाखशुक्लसप्तम्यां गङ्गापूजननिर्णयौ ॥ ५० ॥
आषाढशुक्लसप्तम्यां सूर्यपूजनवर्णनम् ।
इषस्य शुक्लसप्तम्यां देवीपूजननिर्णयः ॥ ५१ ॥
त्रिरात्रकालकथनं दुर्गापूजागृहादिकम् ।
बिल्वशाखार्चनं पश्चाच्छाखानयनवर्त्म च ॥ ५२ ॥
मूलर्क्षे पूजनं देव्याः सरस्वत्याः समीरितम् ।
स्थापितायां महादेव्यामध्यापननिषेधनम् ॥ ५३ ॥
मार्गशीर्षादिमासेषु सप्तमीश्राद्धकीर्त्तनम् ।
सहसः शुक्लसप्तम्यां मित्रपूजनमीरितम् ॥ ५४ ॥
तत्प्रयोगोऽथ माघस्य सप्तमीनिर्णयः क्रमात् ।
दीपदानविधिः प्रोक्तो रथदानं तथैव च ॥ ५५ ॥
तत्र लोलार्कयात्रा च विजयासप्तमी तथा ।
योगः पद्मकसंज्ञस्तु सिद्धासिद्धकथानकम् ॥ ५६ ॥
योगिनीनिर्णयः पश्चादष्टमीनिर्णयस्तथा ।
सर्वाष्टमीषु दुर्गायाः पूजनं समुदीरितम् ॥ ५७ ॥
चैत्राष्टम्यां भवान्यास्तु यात्रोक्ता शोकनाशिनी ।
अशोककलिकाभुक्तिस्तत्रोक्ता मन्त्रपूर्वकम् ॥ ५८ ॥
स्नानं लौहित्यतोयेन बुधयोगप्रशंसनम् ।
सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने ॥ ५९ ॥

त्रिलोचनार्चनविधिर्ज्येष्ठाष्टम्यां प्रकीर्त्तितः ।
पूर्वपक्षे परे पक्षे शुक्लादेवीप्रपूजनम् ॥ ६० ॥
आषाढशुक्लेऽष्टम्यां तु महिषघ्नीप्रपूजनम् ।
जन्माष्टमी विनिर्णीता जयन्ती योगभेदतः ॥ ६१ ॥
प्रकारो ग्रहणस्याथ पारणाकालनिर्णयः ।
महानिशास्वरूपं च भाद्रशुक्लाष्टमीविधिः ॥ ६२ ॥
ज्येष्ठादियोगभेदेन दूर्वानिर्णयविस्तरः ।
अगस्त्युदयकालश्च तथाऽस्तसमयो मुनेः ॥ ६३ ॥
ज्येष्ठापूजनकालस्तु निखिलः संप्रकीर्त्तितः ।
महालक्ष्मीव्रतं पश्चात्तत्समापनमीरितम् ॥ ६४ ॥
प्रौष्ठपद्यष्टकोक्तिश्च पद्मसंज्ञानिरूपणम् ।
महाष्टमी विनिर्णीता सविशेषा गवाष्टमी ॥ ६५ ॥
भैरवस्याष्टमी प्रोक्ता तत्कृत्यं विनिवेदितम् ।
अथाष्टकाश्राद्धकालश्चतुर्भेदः प्रकीर्त्तितः ॥ ६६ ॥
महाभद्रास्वरूपं च भीष्मतर्पणसंग्रहः ।
बहुलाकृत्यमुदितं दीपदानादि सर्वशः ॥ ६७ ॥
सामान्यतो बुधाष्टम्यामेकभक्तव्रतं स्मृतम् ।
सिद्धयोगानुकथनं योगिनीनिर्णयस्ततः ॥ ६८ ॥
नवमीनिर्णयः पश्चाच्छ्रीरामनवमी तथा ।
रामव्रतविधिः सर्वः प्रतिमादानमुत्तमम् ॥ ६९ ॥

मलमासे निषेधस्तु व्रतस्यास्य प्रदर्शितः ।
भद्रकाल्यर्चनविधिर्माधवे पक्षयोर्द्वयोः ॥ ७० ॥
नवम्यामुपवासस्य विधिरेषः प्रदर्शितः ।
ज्येष्ठशुक्लनवम्यां तु पार्वतीपूजनं मतम् ॥ ७१ ॥
आषाढे नवमीयुग्मे दुर्गार्चा संप्रदर्शिता ।
श्रावणे नवमीयुग्मे नक्तभोजनमीरितम् ॥ ७२ ॥
भाद्रशुक्लनवम्यां च दुर्गार्चनविधिः स्मृतः ।
इषकृष्णनवम्यादिसंदिष्टोऽन्वष्टकाविधिः ॥ ७३ ॥
इषस्य शुक्लनवमी महती संप्रकीर्त्तिता ।
बलिप्रदानं तत्रैव बलिद्रव्यन्तु कीर्त्तितम् ॥ ७४ ॥
तन्मन्त्रश्चाथ होमस्य द्रव्याण्युक्तान्यनुक्रमात् ।
मूर्त्तेर्विसर्जनं पश्चात् पारणानिर्णयः कृतः ॥ ७५ ॥
सूतके पारणं प्रोक्तमारम्भादेर्हि लक्षणम् ।
विवाहोऽथ तुलस्यास्तु कार्त्तिके नवमीदिने ॥ ७६ ॥
तद्विधिश्च युगादेर्हि कृत्यमुक्तं सविस्तरम् ।
युगान्ताः कथिताः सर्वे तत्कृत्यं चापि दर्शितम् ॥ ७७ ॥
सहोमासस्य नवमीकृत्यं माघस्य चैव हि ।
अथ सिद्धविरुद्धादियोगिनोनिर्णयस्ततः ॥ ७८ ॥
दशमीनिर्णयश्चाऽथ साधारण्येन कीर्त्तितः ।
चैत्रशुक्लदशम्यां तु यमपूजनमीरितम् ॥ ७९ ॥

ज्येष्ठशुक्लदशम्येषा दशपापहरा स्मृता ।
दशपापानि चोक्तानि योगानां दशकं तथा ॥ ८० ॥
एतत्कृत्यं सुविततं मलमासेऽपि तत्क्रिया ।
कर्त्तव्यत्वेन निर्दिष्टा ततो दशहरास्तवः ॥ ८१ ॥
मन्वादयो विस्तरेण कथिताः कृत्यसंयुताः ।
संक्रान्तिनिर्णयः पश्चात्तद्भेदानां प्रदर्शनम् ॥ ८२ ॥
मेषादिदानकथनं पुण्यकालनिरूपणम् ।
अयने द्वे विनिर्दिष्टे तत्कृत्यं चापि विस्तरात् ॥ ८३ ॥
आश्विनस्य तु शुक्लस्य दशमीनिर्णयस्ततः ।
सीमोल्लङ्घनकार्यं हि पूजनं चाऽऽपराजितम् ॥ ८४ ॥
देशान्तरस्य गमनं शमीपूजानिरूपणम् ।
राजकृत्यं विस्तरेण ह्यभिषेकनिरूपणम् ॥ ८५ ॥
दुर्दशानाशकं पश्चादादित्यव्रतमीरितम् ।
दशमीनियमाः सर्वे सिद्धयोगप्रदर्शनम् ॥ ८६ ॥
योगिनीनिर्णयः पश्चान्निर्णीतैकादशी ततः ।
माहात्म्यमादौ कथितमधिकारिण ईरिताः ॥ ८७ ॥
असामर्थ्ये प्रतिनिधिः प्रकारान्तरमीरितम् ।
स्त्रीणां विशेषः कथितः सूतकेऽनुष्ठितिर्मता ॥ ८८ ॥
दृष्टे रजस्यपि तथा नारीणां करणं मतम् ।
काम्योपवासे नियमा न तु नित्ये प्रदर्शितम् ॥ ८९ ॥

वैष्णवैकादशी द्वेधा शुद्धा विद्धेति भेदतः ।
शुद्धा त्रिधेति सम्प्रोक्तमरुणोदयलक्षणम् ॥ ९० ॥
लक्षणं वैष्णवस्योक्तं ततः स्मार्तविनिर्णयः ।
शुद्धा विद्धेति संप्रोक्ता शुद्धा स्यात्तु चतुर्विधा ॥ ९१ ॥
एकादश्यधिका द्वादश्यधिका चोभयाधिका ।
उभयाधिक्यरहिता विद्धा चैवं प्रकीर्त्तिता ॥ ९२ ॥
नित्यकाम्यप्रभेदेन द्विविधं व्रतमीरितम् ।
काम्यासमापने दोषकीर्त्तनं क्षयलक्षणम् ॥ ९३ ॥
उपवासनिषेधे च भक्ष्यनिर्णय ईरितः ।
हविष्यद्रव्यकथनं भोजनाद्यप्रणाशकम् ॥ ९४ ॥
चैत्रस्यैकादशीकृत्यं विस्तरेणानुवर्णितम् ।
वैशाखस्नानकालस्तु निर्जलैकादशीव्रतम् ॥ ९५ ॥
शयनीनिर्णयः पश्चान्मलमासनिषेधनम् ।
चातुर्मासव्रतारम्भकालाः सर्वे इहोदिताः ॥ ९६ ॥
अस्तादिदोषो नास्तीति व्रतसंख्या च कीर्त्तिता ।
नित्यत्वमेषां कथितं शाकभेदाः प्रकीर्त्तिताः ॥ ९७ ॥
द्विदलानां हि संख्यानं वर्ज्यवस्तुनिदर्शनम् ।
काम्यव्रतानां कथनं समाप्तौ दानकीर्त्तनम् ॥ ९८ ॥
व्रतग्रहणमार्गस्तु श्रावणैकादशीकृतिः ।
नभस्यैकादशीकृत्ये दुग्धव्रतविचारणम् ॥ ९९ ॥

कार्त्तिकस्नानसमयास्त्र्यहस्नानप्रशंसनम् ।
धात्र्यादिसेवनं दानं द्विदलारम्भकीर्त्तनम् ॥ १०० ॥
देवोत्थापनकालश्च भीष्मपञ्चककीर्त्तनम् ।
पौषस्यैकादशीकृत्यं माघस्नानं ततः परम् ॥ १०१ ॥
प्रयागस्नानमहिमा ततस्त्र्यहविनिर्णयः ।
फाल्गुनैकादशीकृत्यं समासेनानुवर्णितम् ॥ १०२ ॥
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ।
द्वादशीनिर्णयः पश्चात् पारणानिर्णयः पुनः ॥ १०३ ॥
श्राद्धादिकालसंप्रा (?)वृद्धिः पारणनिर्णयः ।
हरिवासरसंज्ञा तु मधुद्वादशिकाकृतिः ॥ १०४ ॥
मन्त्रा दमनकस्योक्ता वामनार्चनमीरितम् ।
पारिभाषिकसंज्ञाश्च व्यतीपातः प्रकीर्तितः ॥ १०५ ॥
रामद्वादशिका प्रोक्ता तप्तमुद्राविधारणम् ।
शूद्रस्य विहितं पश्चात् पवित्रारोपणं स्मृतम् ॥ १०६ ॥
जयन्ती वामनस्योक्ता तत्कृत्यं चापि सर्वशः ।
श्रवणद्वादशी प्रोक्ता विष्णुशृङ्खलवर्णनम् ॥ १०७ ॥
प्राशस्त्यं बुधयोगेन पारणानिर्णयस्ततः ।
इतरासां द्वादशीनां नामान्युक्तान्यनुक्रमात् ॥ १०८ ॥
आश्विनद्वादशीकृत्यं गोवत्सद्वादशीव्रतम् ।
विधानं निर्णययुतं तत्र त्रयोदशीनिर्णयः ॥ १०९ ॥

नृणां नीराजनविधिर्द्वादशीषु च पञ्चसु ।
कार्त्तिकद्वादशीकृत्यं देवतोत्थापनादिकम् ॥ ११० ॥
व्रतार्पणविधिस्तत्र तिलद्वादशिकाविधिः ।
द्वादशीषु विशेषेण व्रतार्पणविधिः स्मृतः ॥ १११ ॥
तुलसीमिश्रनैवेद्यभक्षणस्य फलं स्मृतम् ।
द्वादशीवर्ज्यवस्तूनि संख्यातान्यामिषाणि च ॥ ११२ ॥
ऐक्षवं ताम्रपात्रस्थं निषिद्धमिति कीर्त्तितम् ।
अथ सिद्धविरुद्धादियोगिमीनिर्णयस्ततः ॥ ११३ ॥
त्रयोदशीनिर्णयस्तु सामान्येन प्रकीर्त्तितः ।
पक्षप्रदोषो निर्णीतो वारभेदेन तत्फलम् ॥ ११४ ॥
अध्यापनाध्ययनयोः प्रदोषस्य विनिर्णयः ।
चैत्रशुक्लत्रयोदश्यामनङ्गपरिपूजनम् ॥ ११५ ॥
भाद्रशुक्लत्रयोदश्यां गोत्रिरात्रव्रतं स्मृतम् ।
ऊर्जकृष्णत्रयोदश्यां यमदीपविधिः स्मृतः ॥ ११६ ॥
चैत्रकृष्णत्रयोदश्यां वारुणीयोगकीर्त्तनम् ।
वरुणप्रतिमादानं विधिः सर्वोपि कीर्त्तितः ॥ ११७ ॥
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ।
शुक्लकृष्णचतुर्दश्यौ विनिर्णीते ततः परम् ॥ ११८ ॥
मधोः शुक्लचतुर्दश्या निर्णयोऽनङ्गपूजनम् ।
श्रीनृसिंहजयन्त्यास्तु निर्णयः कर्तृनिर्णयः ॥ ११९ ॥

व्रतप्रकारकथनं तन्नित्यत्वप्रकाशनम् ।
ओँकारयात्रा कथिता श्रावणे भूतनिर्णयः ॥ १२० ॥

भाद्रशुक्लचतुर्दश्यामनन्तव्रतनिर्णयः ।
ऊर्जकृष्णचतुर्दश्यामभ्यङ्गस्नानमीरितम् ॥ १२१ ॥

तन्निर्णयः प्रकथितो यमतर्पणमेव च ।
प्रदोषसमये दीपदानं च कथितं ततः ॥ १२२ ॥

ऊर्जकृष्णचतुर्दश्याः कृत्यमुक्तं समासतः ।
मार्गशुक्लचतुर्दश्या अपि कृत्यं हि वर्णितम् ॥ १२३ ॥

शिवरात्रिव्रतस्याथ निर्णयः समुदाहृतः ।
अधिकारश्च सर्वेषां व्रतानुष्ठानपद्धतिः ॥ १२४ ॥

पारणानिर्णयः पश्चाच्चैत्रकृष्णचतुर्दशी ।
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ॥ १२५ ॥

अमावास्या विनिर्णीता सोमप्राशस्त्यमेव च ।
योगः पुष्करसंज्ञस्तु सावित्रीव्रतकीर्त्तनम् ॥ १२६ ॥

दर्भसंग्रहकालस्तु कार्त्तिकामाव्रतं तथा ।
अर्द्धोदयविधिः पश्चादात्मनिर्णय उदाहृतः ॥ १२७ ॥

पारिभाषिकयोगस्तु पाताख्यः समुदाहृतः ।
अथ सिद्धविरुद्धादियोगिनीनिर्णयस्ततः ॥ १२८ ॥

पूर्णिमानिर्णयः पश्चादथ चैत्रस्य पूर्णिमा ।
वैशाखोद्यापनविधिर्वैशाख्यामनुवर्णितः ॥ १२९ ॥

दानं कृष्णाजिनस्याथ कुम्भदानं तथैव च ।
ज्येष्ठस्य पूर्णिमायां तु सावित्रीपूजनं स्मृतम् ॥ १३० ॥

तिलछत्रादिदानानि कीर्त्तितानि विशेषतः ।
कोकिलाव्रतकालश्च व्यासपूजाविनिर्णयः ॥ १३१ ॥

विष्णोः शयनकालश्च देशकालविभेदतः ।
श्रावणी पौर्णमासी तु निर्णीता च ततः परम् ॥ १३२ ॥

उपाकर्माऽपि तत्रोक्तं विस्तरेण ततः परम् ।
उत्सर्जनं च कथितं श्रवणाकर्मनिर्णयः ॥ १३३ ॥

सर्वेषामिह वर्णानां रक्षाबन्धविधिस्तथा ।
भद्रायां तन्निषेधस्तु हयग्रीवसुरार्चनम् ॥ १३४ ॥

नान्दीमुखानां प्रत्यब्दं भाद्र्यां श्राद्धविधिस्तथा ।
आश्विन्यामाश्विनीकर्म कोजागरविधिस्तथा ॥ १३५ ॥

कार्त्तिक्यां कार्त्तिकेयस्य दर्शनं त्रिपुरोत्सवः ।
क्षीरसागरदानं च वृषोत्सर्गविधिस्तथा ॥ १३६ ॥

अथोर्जव्रतिनः सम्यगुद्यापनविधिः स्मृतः ।
मार्गशीर्ष्यां पौर्णमास्यामुक्तं प्रत्यवरोहणम् ॥ १३७ ॥

पौषीकृत्यं ततः प्रोक्तं माघीकृत्यं सविस्तरम् ।
स्नानोद्यापनकर्माणि होलिकानिर्णयस्ततः ॥ १३८ ॥

भद्रापुच्छं विनिर्णीतं होलिकाकृत्यमेव च ।
मलमासनिषेधश्च दोलोत्सव उदाहृतः ॥ १३९ ॥

अथ सिद्धविरुद्धादियोगिनी निर्णयस्ततः ।
सूक्ष्मत्वात्सन्धिकालस्य कृतस्तत्रेष्टिनिर्णयः ॥ १४० ॥
विकृते कालनिर्देशः पश्वाग्रयणनिर्णयः ।
निर्णयो ग्रहणस्याथ दानद्रव्यमुदाहृतम् ॥ १४१ ॥
पात्रलक्षणमप्युक्तमपात्रे दानमीरितम् ।
चूडामणिसमाख्या च सूतकादौ तदर्हता ॥ १४२ ॥
दानश्राद्धादिकालश्च स्नानतीर्थविनिर्णयः ।
निषिद्धग्रहणे दानशान्ती प्रोक्तेऽथ (?) पक्षकः ॥ १४३ ॥
मासस्तद्भेदकथनं विनियोगस्तथैव च ।
मासदेवाः समाख्याता मलमासस्य निर्णयः ॥ १४४ ॥
कार्याकार्यविवेकस्तु दानं चोक्तं ततः परम् ।
चान्द्रसावनसौरास्तु त्रयः संवत्सरा अमी ॥ १४५ ॥
क्षौरकालनिषेधश्च क्वचित्तदपवादनम् ।
कलिवर्ज्यानि चोक्तानि पर्ववर्ज्यानि चैव हि ॥ १४६ ॥
तैलवर्जनकालश्च पुष्पतैलनिषेधनम् ।
अष्टम्यादिषु वर्ज्यानि प्रथमाब्दनिषेधनम् ॥ १४७ ॥
जन्मवासरकृत्यं च तत्र वर्ज्यानुकीर्त्तनम् ।
दिनद्वये जन्मतिथेः सत्त्वासत्त्वविनिर्णयः ॥ १४८ ॥
अमावास्या विनिर्णीता पितृयज्ञविनिर्णयः ।
श्राद्धकालो विनिर्णीतो व्रतकालस्तथैव च ॥ १४९ ॥

सामान्यो व्रतधर्मश्च हिताहितविकीर्त्तनम् ।
स्त्रीव्रतेषु विशेषस्तु गर्भिण्यादिनिषेधनम् ॥ १५० ॥
संख्या प्रतिनिधीनां तु दोषस्त्यागे व्रतस्य हि ।
नैमित्तिकः पुण्यकाल इत्येवं कथितः क्रमः ॥ १५१ ॥

इत्थं दिवाकरसुतेन कनीयसा श्री-
रामानुजेन गुरुभक्तिपरायणेन ।
श्रीतातपादरचिते सुजनप्रियेऽस्मिन्
ग्रन्थे क्रमो विलिखितः सवितुः प्रसादात् ॥१५२॥

इति श्रीदिवाकरसूरिसूनुवैजनाथकृता तिथ्यर्कप्रकाशा-
नुक्रमणिका समाप्ता।

———

# तिथ्यर्के प्रमाणत्वेनोपन्यस्तानां ग्रन्थादीना-मकारादिक्रमेण वर्णानुक्रमणिका

## क

## ग



## च



## छ



## ज

ब

भ

## य



## र

ल



व

श



ष



स

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे पङ्क्तौ |
|---|---|---|
| प्रतिपदातिथीनां | प्रतिपदादितिथीनां | ८—१ |
| यामले | रुद्रयामले | १४—९ |
| जयायै: नम: | जयायै नम: | १६—५ |
| ब्रह्माणीं | ब्राह्मणीं | १८—१ |
| आश्वयुक्‍ शुक्ल | आश्वयुक्‌शुक्ल | २०—१५ |
| कालिकादर्शे | कालादर्शे | ३१—२० |
| चतुर्ष्वपि पक्षेषु | चतुर्ष्वसितपक्षेषु | ३२—१८ |
| स्याद | स्याद् | ४४—१६ |
| सामाख्याता | समाख्याता | ४५—६ |
| ततत्परत: | तत्परत: | ४५—८ |
| ननु | न तु | ४५—११ |
| कुर्वति | कुर्वीत | ४७—२ |
| दत्वा या कर्तुं० | दत्वा कर्तु० | ५६—९ |
| मत्कृताचारादर्शे | मत्कृताचारार्के | ६३—१८ |
| ह्रिपतितं | ह्रि पतितं | ७६—४ |
| गोभिरत्नै | गोभीरत्नै | ७८—६ |
| सप्तमीयोगप्रशस्त्यात | सप्तमीयोगप्राशस्त्यात | ८३—१५ |
| उपोषणाङ्गत्वेन नार्घ्यदानम् | उपोषणाङ्गत्वेनार्घ्यदानम्. | ८६—१४ |
| दिति मन्त्रेण | दिति च मन्त्रेण | १०३—६ |
| मपराह्ने | मपराह्णे | १०५—१८ |
| अपराह्ने | अपराह्णे | १२४—१४ |

| अशुद्धम् | शुद्धम् | पृष्ठे पङ्क्तौ |
|---|---|---|
| परे द्युर्द्वादश्यभावे | परेद्युर्द्वादश्यभावे | १३४—१८ |
| चैत्रात्सवे | चैत्रोत्सवे | १७४—७ |
| चानन्तयं | चानन्तकं | १८२—२ |
| भानाभावात् | मानाभावात् | १८३—४ |
| दर्शे | दर्शे च | १८४—१३ |
| सहस्रार्कगृहैः | सहस्रार्कग्रहैः | २०२—३ |
| तदर्द्धार्द्धे न | तदर्द्धार्द्धेन | २०६—१२ |
| पराह्निकम् | पराह्णिकम् | २१३—२० |
| व्याप्यारास | वाप्यारास | २१६—१८ |
| विशोका चतस्रश्च विन्ध्य-स्योत्तरस्तथा | विशोका च चतस्रा च विन्ध्यस्योत्तरतस्तथा | २४०—१६ |
| याद्वेदः | यावद्वेदः | २५६—१५ |
| प्येकरदेशादि | प्येकदेशादि | २६४—२० |
| रविमण्डलान्तर्गतो | रविमण्डलान्तरगतो | २७०—१० |

———

# अच्युतग्रन्थमालातः प्रकाशितानां पुस्तकानां सूचीपत्रम् ।

## (क) विभागे

१. **भगवन्नामकौमुदी**—श्रीलक्ष्मीधरविरचिता श्रीमदनन्तदेवनिर्मितप्रकाशटीकासहिता, आचार्यवरगोस्वामिदामोदरलालशास्त्रिभिः सम्पादिता । मू०—आ० १०

२. **भक्तिरसायनम्**—श्रीमधुसूदनसरस्वतीविरचितम् । प्रथमोल्लासे मूलकृद्रचितया टीकया, शेषद्वयोल्लासे आचार्यवरगोस्वामिदामोदरलालशास्त्रिविरचितया प्रेमप्रपया टीकया सहितम् । मू०—आ० १२

३. **शुल्बसूत्रम्**—श्रीमहर्षिकात्यायनप्रणीतम् । वेदाचार्य्यश्रीविद्याधरशर्म्मविरचितया सरलया वृत्त्या सहितम् । तैरेव सम्पादितम् । मू०—आ० ४

४. **कात्यायनश्रौतसूत्रम्**—श्रीमहर्षिकात्यायनप्रणीतम् । वेदाचार्यश्रीविद्याधरशर्म्मविरचितया सरलया वृत्त्या समेतम् । तैरेव सम्पादितम् । मू०—रु० ६

५. **प्रत्यक्तत्त्वचिन्तामणिः**—( प्रथमो भागः ) श्रीसदानन्दविद्वद्विरचितः ग्रन्थकृद्रचितया स्वोपज्ञस्वप्रभाख्यटीकया सहितः, साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा सम्पादितः । मू०—रु० २

६. **भक्तिरसामृतसिन्धुः**—श्रीरूपगोस्वामिविरचितः । श्रीजीवगोस्वामिकृतदुर्गमसङ्गमनीटीकोपेतः, आचार्यवरगोस्वामिश्रीदामोदरलालशास्त्रिभिः सम्पादितः । मू०—रु० ३

७. प्रत्यक्तत्त्वचिन्तामणिः—( द्वितीयो भागः ) श्रीसदानन्दविद्वद्भिरचितः ग्रन्थकृद्रचितया स्वोपज्ञप्रभाख्यव्याख्यया सहितः, साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा सम्पादितः ।

मू०—रु० २ आ० ४

८. तिथ्यर्कः—श्रीदिवाकरविरचितः, साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा सम्पादितः । मू० —रु० १ आ० ८

(ख) विभागे

१. खण्डनखण्डखाद्यम् —श्रीहर्षप्रणीतम् । पण्डितप्रवरश्रीचण्डीप्रसादसुकुलविरचितभाषानुवादेन सहितम् ।

मू०—रु० २ आ० १२

२. काशीकेदारमाहात्म्यम्—साहित्यरञ्जनश्रीविजयानन्दत्रिपाठिविरचितभाषानुवादेन सहितम्, साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा सम्पादितम् । मू०—रु० २ आ० ८

प्राप्तिस्थानम्—

(१) अच्युतग्रन्थमालाकार्यालय, काशी ।

(२) गीता प्रेस, गोरखपुर ।

---

